# पञ्चमोऽङ्कः

(ततः प्रविशति सीता तापसी च)

**सीता —** अये, उपहारसुमनआकीर्णः संमार्जित आश्रमः। आश्रमपदविभवेनानुष्ठितो देवसमुदाचारः। तद् यावदार्यपुत्रो नागच्छति तावदिमान् बालवृक्षानुदकप्रदानेनानुक्रोशयिष्यामि। [अय्ये उवहारसुमणाइण्णो सम्मज्जिदो अस्समो। अस्समपदविभवेण अणुट्ठिओ देवसमुदाआरो। ता जाव अय्यउत्तो ण आअच्छदि दाव इमाण बालरुक्खाणं उदअप्पदाणेण अणुक्कोसइस्सं।]

**तापसी —** अविघ्नमस्य भवतु। [अविग्घं से होदु।]

(ततः प्रविशति रामः)

**रामः —** (सशोकम्)

**त्यक्त्वा तां गुरुणा मया च रहितां रम्यामयोध्यां पुरी-**
**मुग्रस्यापि ममाभिषेकमखिलं मत्सन्निधावागतः।**
**रक्षार्थं भवतः पुनर्गुणनिधिस्तत्रैव सम्प्रेषितः**
**कष्टं भो नृपतेर्धुरं सुमहतीमेकः समुत्कर्षति ॥ १ ॥**

(विमृश्य।) ईदृशमेवैतत्। यावदिदानीमीदृशशोकविनोदनार्थमवस्थाकुटुम्बिनीं मैथिलीं पश्यामि। तत् क्व नु खलु गता वैदेही! (परिक्रम्यावलोक्य) अये, इमानि खलु प्रत्यग्राभिषिक्तानि वृक्षमूलानि अदूरगतां मैथिलीं सूचयन्ति। तथाहि।

**भ्रमति सलिलं वृक्षावर्ते सफेनमवस्थितं**
**तृषितपतिता नैते क्लिष्टं पिबन्ति जलं खगाः।**
**स्थलमभिपतन्त्यार्द्राः कीटा बिले जलपूरिते**
**नववलयिनो वृक्षा मूले जलक्षयरेखया ॥ २ ॥**

(विलोक्य।) अये, इयं वैदेही। भोः कष्टम्।

**योऽस्याः करः श्राम्यति दर्पणेऽपि**
**स नैति खेदं कलशं वहन्त्याः।**
**कष्टं वनं स्त्रीजनसौकुमार्यं**
**समं लताभिः कठिनीकरोति ॥ ३ ॥**

(उपेत्य।) मैथिलि, अपि तपो वर्धते।

**सीता —** हुम् आर्यपुत्रः। जयत्वार्यपुत्रः। [हुं अय्यउत्तो। जेदु अय्यउत्तो।]

**रामः —** मैथिलि, यदि ते नास्ति धर्मविघ्न आस्यताम्।

**सीता —** यदार्यपुत्र आज्ञापयति। [जं अय्यउत्तो आणवेदि।] (उपविशति)

**रामः —** मैथिलि, प्रतिवचनार्थिनीमिव त्वां पश्यामि। किमिदम्।

**सीता —** शोकशून्यहृदयस्येवार्यपुत्रस्य मुखरागः। किमेतत्। [सोअसुण्ण-
अअस्स विअ अय्यउत्तस्स मुहराओ। किं एदं।]

**रामः —** मैथिलि, स्थाने खलु कृता चिन्ता।

**कृतान्तशल्याभिहते शरीरे तथैव तावद्धृदयव्रणो मे।**
**नानाफलाः शोकशराभिघातास्तत्रैव तत्रैव पुनः पतन्ति ॥४**

**सीता —** आर्यपुत्रस्य क इव सन्तापः। [अय्यउत्तस्स को विअ सन्दावो।]

**रामः —** श्वस्तत्रभवतस्तातस्यानुसंवत्सरश्राद्धविधिः। कल्पविशेषेण निवाप-
क्रियामिच्छन्ति पितरः। तत् कथं निर्वर्तयिष्यामीत्येतच्चिन्तयामि
अथवा,

**गच्छन्ति तुष्टिं खलु येन केन**
**त एव जानन्ति हि तां दशां मे।**
**इच्छामि पूजां च तथापि कर्तुं**
**तातस्य रामस्य च सानुरूपाम् ॥ ५ ॥**

**सीता —** आर्यपुत्र, निर्वर्तयिष्यति श्राद्धं भरत ऋद्ध्या, अवस्थानुरूपं फलोदके-
नाप्यार्यपुत्रः। एतत् तातस्य बहुमततरं भविष्यति। [अय्यउत्त
णिव्वत्तइस्सिदि सद्धं भरतो रिद्धीए, अवत्थाणुरूवेण फलोदएण
अय्यउत्तो। एदं तादस्स बहुमदअरं भविस्सदि।]

**रामः —** मैथिलि,

**फलानि दृष्ट्वा दर्भेषु स्वहस्तरचितानि नः।**
**स्मारितो वनवासं च तातस्तत्रापि रोदिति ॥ ६ ॥**

(ततः प्रविशति परिव्राजकवेषेण रावणः।)

**रावणः —** एष भोः।

**नियतमनियतात्मा रूपमेतद् गृहीत्वा**
**खरवधकृतवैरं राघवं वञ्चयित्वा।**
**स्वरपदपरिहीणां हव्यधारामिवाहं**
**जनकनृपसुतां तां हर्तुकामः प्रयामि ॥ ७ ॥**

(परिक्रम्याधो विलोक्य ।) इदं रामस्याश्रमपदद्वारम् । यावदवतरामि । (अवतरति ।) यावदहमप्यतिथिसमुदाचारमनुष्ठास्यामि । अहमतिथिः । कोऽत्र भोः ।

**रामः —** (श्रुत्वा ।) स्वागतमतिथये ।

**रावणः —** साधु विशेषितं खलु रूपं स्वरेण

**रामः —** (विलोक्य ।) अये भगवान् ! भगवन्, अभिवादये ।

**रावणः —** स्वस्ति ।

**रामः —** भगवन्, एतदासनमास्यताम् ।

**रावणः —** (आत्मगतम् ।) कथमाज्ञप्त इवास्म्यनेन । (प्रकाशम्) बाढम् । (उपविशति ।)

**रामः —** मैथिलि, पाद्यमानय भगवते । .

**सीता —** यदार्यपुत्र आज्ञापयति । [जं अय्यउत्तो आणवेदि ।] (निष्क्रम्य-प्रविश्य ।) इमा आपः । [इमा आवो ।]

**रामः —** शुश्रूषय भगवन्तम् ।

**सीता —** यदार्यपुत्र आज्ञापयति । [जं अय्यउत्तो आणवेदि ।]

**रावणः —** (मायाप्रकाशनपर्याकुलो भूत्वा ।) भवतु भवतु ।

**इयमेका पृथिव्यां हि मानुषीणामरुन्धती ।**
**यस्या भर्तेति नारीभिः सत्कृतः कथ्यते भवान्** ॥ ८ ॥

**रामः —** तेन हि आनय अहमेव शुश्रूषयिष्ये ।

**रावणः —** अयि छायां परिहृत्य शरीरं न लङ्घयामि । वाचानुवृत्तः खल्वतिथिसत्कारः । पूजितोऽस्मि । आस्यताम् ।

**रामः —** बाढम् । (उपविशति ।)

**रावणः —** (आत्मगतम्) यावदहमपि ब्राह्मणसमुदाचारमनुष्ठास्यामि । (प्रकाशम् ।) भोः । काश्यपगोत्रोऽस्मि । साङ्गोपाङ्गं वेदमधीये मानवीयं धर्मशास्त्रं माहेश्वरं योगशास्त्रं मेधातिथेर्न्यायशास्त्रं प्राचेतसं श्राद्धकल्पं च ।

**रामः —** कथं कथं श्राद्धकल्पमिति ।

**रावणः —** सर्वाः श्रुतीरतिक्रम्य श्राद्धकल्पे स्पृहा दर्शिता । किमेतत् ।

**रामः —** भगवन्, भ्रष्टायां पितृमत्तायामागम इदानीमपः ।

**रावणः —** अलं परिहृत्य । पृच्छतु भवान् ।

रामः — भगवन्, निवपनक्रियाकाले केन पितॄंस्तर्पयामि ।

रावणः — सर्वं श्रद्धया दत्तं श्राद्धम् ।

रामः — भगवन्, अनादरतः परित्यक्तं भवति । विशेषार्थं पृच्छामि ।

रावणः — श्रूयताम् । विरूढेषु दर्भाः, ओषधीषु तिलाः, कलायं शाकेषु, मत्स्येषु महाशफरः, पक्षिषु वाध्रीणसः, पशुषु गौः खड्गो वा इत्येते मानुषाणां विहिताः ।

रामः — भगवन्, वाशब्देनावगतमप्यन्यदस्ति ।

रावणः — अस्ति प्रभावसम्पाद्यम् ।

रामः — भगवन्, एष एष मे निश्चयः ।

उभयस्यास्ति सान्निध्यं यद्येतत् साधयिष्यति ।
धनुर्वा तपसि श्रान्ते श्रान्ते धनुषि वा तपः ॥ ९ ॥

रावणः — सन्ति । हिमवति प्रतिवसन्ति ।

रामः — हिमवतीति । ततस्ततः ।

रावणः — हिमवतः सप्तमे शृङ्गे प्रत्यक्षस्थाणुशिरःपतितगङ्गाम्बुपायिनो वैदूर्यश्यामपृष्ठाः पवनसमजवाः काञ्चनपार्श्वा नाम मृगाः यैर्वैखानसवालखिल्यनैमिशीयादयो महर्षयश्चिन्तितमात्रोपस्थितैर्विपन्नैः श्राद्धान्यभिवर्धयन्ति ।

तैस्तर्पिताः सुतफलं पितरो लभन्ते
हित्वा जरां खमुपयान्ति हि दीप्यमानाः ।
तुल्यं सुरैः समुपयान्ति विमानवास-
मावर्तिभिश्च विषयैर्न बलाद् ध्रियन्ते ॥ १० ॥

रामः — मैथिलि,

आपृच्छ पुत्रकृतकान् हरिणान् द्रुमांश्च
विन्ध्यं वनं तव सखीर्दयिता लताश्च ।
वत्स्यामि तेषु हिमवद्गिरिकाननेषु
दीप्तैरिवौषधिवनैरुपरञ्जितेषु ॥ ११ ॥

सीता — यदार्यपुत्र आज्ञापयति । [जं अय्यउत्तो आणवेदि ।]

रावणः — कौसल्यामातः, अलमातमनोरथेन। न ते मानुषैर्दृश्यन्ते।
रामः — भगवन्, किं हिमवति प्रतिवसन्ति!
रावणः — अथ किम्।
रामः — तेन हि पश्यतु भवान्।

**सौवर्णान् वा मृगांस्तान् मे हिमवान् दर्शयिष्यति।**
**भिन्नो मद्बाणवेगेन क्रौञ्चत्वं वा गमिष्यति ॥ १२ ॥**

रावणः — (स्वगतम्।) अहो असह्यः खल्वस्यावलेपः।
रामः — (दिशो विलोक्य।) अये विद्युत्सम्पात इव दृश्यते।
रावणः — (प्रकाशम्।) कौसल्यामातः, इहस्थमेव भवन्तं पूजयति हिमवान्। एष काञ्चनपार्श्वः।
रामः — भगवतो वृद्धिरेषा।
सीता — दिष्ट्यार्यपुत्रो वर्धते। [दिट्ठिआ अय्यउत्तो वड्ढइ।]
रामः — न न।

**तातस्यैतानि भाग्यानि यदि स्वयमिहागतः।**
**अर्हत्येष हि पूजायां लक्ष्मणं ब्रूहि मैथिलि ॥ १३ ॥**

सीता — आर्यपुत्र, ननु तीर्थयात्रात उपावर्तमानं कुलपतिं प्रत्युद्गच्छेति सन्दिष्टः सौमित्रिः। [अय्यउत्त णं तित्थअत्तादो उवावत्तमाणं कुलवदिं पच्चुग्गच्छेहित्ति सन्दिट्ठो सोमित्ती।]
रामः — तेन हि अहमेव यास्यामि।
सीता — आर्यपुत्र अहं किं करिष्यामि। [अय्यउत्त अहं किं करिस्सं।]
रामः — शुश्रूषयस्व भगवन्तम्।
सीता — यदार्यपुत्र आज्ञापयति। [जं अय्यउत्तो आणवेदि।]

(निष्क्रान्तो रामः।)

रावणः — अये अयमर्घ्यमादायोपसर्पति राघवः। एष इदानीं पूजामनवेक्ष्य भावन्तं मृगं दृष्ट्वा धनुरारोपयति राघवः।

**अहो बलमहो वीर्यमहो सत्त्वमहो जवः।**
**राम इत्यक्षरैरल्पैः स्थाने व्याप्तमिदं जगत् ॥ १४ ॥**

एष मृगः एकप्लुतातिक्रान्तशरविषयो वनगहनं प्रविष्टः।

**सीता —** (आत्मगतम्) आर्यपुत्रविरहितया भयं मेऽत्रोत्पद्यते । [अय्यउत्तविरहिदाए भअं मे एत्थ उप्पज्जइ ।]

**रावणः —** (आत्मगतम्)

> **माययापहृते रामे सीतामेकां तपोवनात् ।**
> **हरामि रुदतीं बालाममन्त्रोक्तामिवाहुतिम्** ॥ १५ ॥

**सीता —** यावदुटजं प्रविशामि । (गन्तुमीहते ।) [जाव उडजं पविसामि ।]

**रावणः —** (स्वरूपं गृहीत्वा) सीते, तिष्ठ तिष्ठ ।

**सीता —** (सभयम्) हं क इदानीमयम् । [हं को दाणि अअं ।]

**रावणः —** किं न जानीषे ।

> **युद्धे येन सुराः सदानवगणाः शक्रादयो निर्जिता**
> **दृष्ट्वा शूर्पणखाविरूपकरणं श्रुत्वा हतौ भ्रातरौ ।**
> **दर्पाद् दुर्मतिमप्रमेयबलिनं रामं विलोभ्य च्छलैः**
> **स त्वां हर्तुमना विशालनयने प्राप्तोऽस्म्यहं रावणः ॥१६॥**

**सीता —** हं रावणो नाम । [हं ळावणो णाम ।] (प्र[illegible] ।)

**रावणः —** आः रावणस्य चक्षुर्विषयमागता क्व यास्यसि ।

**सीता —** आर्यपुत्र, परित्रायस्व परित्रायस्व । सौमित्रे, परित्रायस्व परित्रायस्व । [अय्यउत्त परित्ताआहि परित्ताआहि । सोमित्ती परित्ताआहि परित्ताआहि ।]

**रावणः —** सीते, श्रूयतां मत्पराक्रमः ।

> **भग्नः शक्रः कम्पितो वित्तनाथः**
> **क्रुष्टः सोमो मर्दितः सूर्यपुत्रः ।**
> **धिग् भोः स्वर्गं भीतदेवैर्निविष्टं**
> **धन्या भूमिर्वर्तते यत्र सीता** ॥ १७ ॥

**सीता —** आर्यपुत्र, परित्रायस्व परित्रायस्व । सौमित्रे, परित्रायस्व परित्रायस्व माम् । [अय्यउत्त परित्ताआहि परित्ताआहि । सोमित्ती परित्ताआहि परित्ताआहि मं ।]

**रावणः —**

**रामं वा शरणमुपेहि लक्ष्मणं वा**
**स्वर्गस्थं दशरथमेव वा नरेन्द्रम् ।**
**किं वा स्यात् कुपुरुषसंश्रितैर्वचोभि-**
**र्न व्याघ्रं मृगशिशवः प्रधर्षयन्ति** ॥ १८ ॥

**सीता —** आर्यपुत्र, परित्रायस्व परित्रायस्व । सौमित्रे, परित्रायस्व परित्रायस्व माम् ! [अय्यउत्त परित्ताआहि परित्ताआहि । सोमित्ती परित्ताआहि परित्ताआहि मं ।]

**रावणः —**

**विलपसि किमिदं विशालनेत्रे**
**विगणय मां च यथा तवार्यपुत्रम् ।**
**विपुलबलयुतो ममैष योद्धुं**
**ससुरगणोऽप्यसमर्थ एव रामः** ॥ १९ ॥

**सीता —** (सरोषम्) शप्तोऽसि । [सत्तो सि ।]

**रावणः —** ह ह ह । अहो पतिव्रतायास्तेजः ।

**योऽहमुत्पातितो वेगान्न दग्धः सूर्यरश्मिभिः ।**
**अस्याः परिमितैर्दग्धः शप्तोऽसीत्येभिरक्षरैः** ॥ २० ॥

**सीता —** आर्यपुत्र, परित्रायस्व परित्रायस्व । [अय्यउत्त परित्ताआहि परित्ताआहि ।]

**रावणः —** (सीतां गृहीत्वा ।) भो भो जनस्थानवासिनस्तपस्विनः शृण्वन्तु शृण्वन्तु भवन्तः ।

**बलादेष दशग्रीवः सीतामादाय गच्छति ।**
**क्षात्रधर्मे यदि स्निग्धः कुर्याद् रामः पराक्रमम्** ॥ २१ ॥

**सीता —** आर्यपुत्र, परित्रायस्व परित्रायस्व । [अय्यउत्त परित्ताआहि परित्ताआहि ।]

रावणः — (परिक्रामन् विलोक्य ।) अये स्वपक्षपवनोत्क्षेपक्षुभितवनषण्डप्रचण्डचञ्चुरभिधावत्येष जटायुः। आः तिष्ठेदानीम् ।

मद्भुजाकृष्टनिस्त्रिंशकृत्तपक्षक्षतच्युतैः ।
रुधिरैरार्द्रगात्रं त्वां नयामि यमसादनम् ॥ २२ ॥

(निष्क्रान्तौ ।)

पञ्चमोऽङ्कः ।

# षष्ठोऽङ्कः

(ततः प्रविशतो वृद्धतापसौ)

उभौ — परित्रायतां परित्रायतां भवन्तः।

प्रथमः —

इयं हि नीलोत्पलदामवर्चसा
मृणालशुक्लोज्ज्वलदंष्ट्रहासिना।
निशाचरेन्द्रेण निशार्धचारिणा
मृगीव सीता परिभूय नीयते ॥ १ ॥

द्वितीयः — एषा खलु तत्रभवती वैदेही।

विचेष्टमानेव भुजङ्गमाङ्गना
विधूयमानेव च पुष्पिता लता।
प्रसह्य पापेन दशाननेन सा
तपोवनात् श्रीरिवापनीयते ॥ २ ॥

उभौ — परित्रायतां परित्रायतां भवन्तः।

प्रथमः — (ऊर्ध्वमवलोक्य।) अये वचनसमकाल एव दशरथस्यानृण्यं कर्तुं मयि स्थिते क्व यास्यसीति रावणमाहूयान्तरिक्षमुत्पतितो जटायुः।

द्वितीयः — एष रोषादुद्वृत्तनयनः प्रतिनिवृत्तो रावणः।

प्रथमः — एष रावणः।

द्वितीयः — एष जटायुः।

उभौ — हन्तैतदन्तरिक्षे प्रवृत्तं युद्धम्।

प्रथमः — काश्यप काश्यप, पश्य क्रव्यादीश्वरस्य सामर्थ्यम्।

पक्षाभ्यां परिभूय वीर्यविषयं द्वन्द्वं प्रतिव्यूहते
तुण्डाभ्यां सुनिघृष्टतीक्ष्णमबलः संवेष्टनं चेष्टते।
तीक्ष्णैरायसकण्टकैरिव नखैर्भीमान्तरं वक्षसो
वज्राग्रैरिव दार्यमणविषमाच्छैलाच्छिला पात्यते ॥३॥

द्वितीयः — हन्त संक्रुद्धेन रावणेनासिना क्रव्यादीश्वरः स दक्षिणांसदेशे हतः।

उभौ — हा धिक्। पतितोऽत्रभवान् जटायुः।

प्रथमः — भोः कष्टम् । एष खलु तत्रभवान् जटायुः ।

कृत्वा स्ववीर्यसदृशं परमं प्रयत्नं
क्रीडामयूरमिव शत्रुमचिन्तयित्वा ।
दीप्तं निशाचरपतेरवधूय तेजो
नागेन्द्रभग्नवनवृक्ष इवावसन्नः ॥ ४ ॥

उभौ — स्वर्ग्योऽयमस्तु ।

प्रथमः — काश्यप, आगम्यताम् । इमं वृत्तान्तं तत्रभवते राघवाय निवेदयिष्यावः ।

द्वितीयः — बाढम् । प्रथमः कल्पः ।

(निष्क्रान्तौ ।)

विष्कम्भकः ।

(ततः प्रविशति काञ्चुकीयः ।)

काञ्चुकीयः — क इह भोः काञ्चनतोरणद्वारमशून्यं कुरुते

(प्रविश्य ।)

प्रतिहारी — आर्य, अहं विजया । किं क्रियताम् । [अय्य अहं विजया । किं करीअदु ।]

काञ्चुकीयः — विजये, निवेद्यतां निवेद्यतां भरतकुमाराय—एष खलु रामदर्शनार्थं जनस्थानं प्रस्थितः प्रतिनिवृत्तस्तत्रभवान् सुमन्त्र इति ।

प्रतिहारी — आर्य, अपि कृतार्थस्तातसुमन्त्र आगतः । [अय्य अवि किदत्थो तादसुमन्तो आअदो ।]

काञ्चुकीयः — भवति, न जाने ।

हृदयस्थितशोकाग्निशोषिताननमागतम् ।
दृष्ट्वैवाकुलमासीन्मे सुमन्त्रमधुना मनः ॥ ५ ॥

प्रतिहारी — आर्य, एतत् श्रुत्वा पर्याकुलमिव मे हृदयम् । [अय्य एदं सुणिअ पय्याउळं विअ मे हिअअं ।]

काञ्चुकीयः — भवति, किमिदानीं स्थिता । शीघ्रं निवेद्यताम् ।

प्रतिहारी — आर्य, इयं निवेदयामि । (निष्क्रान्ता ।) [अय्य इअं णिवेदेमि ।]

काञ्चुकीयः —(विलोक्य ।) अये अयमत्रभवान् भरतकुमारः सुमन्त्रागमनजनित-कुतूहलहृदयश्चीरवल्कलवमनश्रित्रजटापिञ्जरितोत्तमाङ्ग इत एवाभि-वर्तते । य एषः

प्रख्यातसद्गुणगणः प्रतिपक्षकाल-
स्तिग्मांशुवंशतिलकस्त्रिदशेन्द्रकल्पः ।
आज्ञावशादखिलभूपरिरक्षणस्थः
श्रीमानुदारकलभेभसमानयानः ॥ ६ ॥

(ततः प्रविशति भरतः प्रतिहारी च ।)

भरतः — विजये, एवमुपगतस्तत्रभवान् सुमन्त्रः ।

गत्वा तु पूर्वमयमार्यनिरीक्षणार्थं
लब्धप्रसादशपथे मयि सन्निवृत्ते ।
दृष्ट्वा किमागत इहात्रभवान् सुमन्त्रो
रामं प्रजानयनबुद्धिमनोभिरामम् ॥ ७ ॥

काञ्चुकीयः —(उपगम्य) जयतु कुमारः ।

भरतः — अथ कस्मिन् प्रदेशे वर्तते तत्रभवान् सुमन्त्रः ।

काञ्चुकीयः —असौ काञ्चनतोरणद्वारे ।

भरतः — तेन हि शीघ्रं प्रवेश्यताम् ।

काञ्चुकीयः —यदाज्ञापयति कुमारः (निष्क्रान्तौ ।)

(ततः प्रविशति सुमन्त्रः प्रतिहारी च)

सुमन्त्रः — (सशोकम्) कष्टं भोः कष्टम् ।

नरपतिनिधनं मयानुभूतं
नृपतिसुतव्यसनं मयैव दृष्टम् ।
श्रुत इह स च मैथिलीप्रणाशो
गुण इव बह्वपराद्धमायुषा मे ॥ ८ ॥

प्रतिहारी — (सुमन्त्रमुद्दिश्य) एत्वेत्वार्यः । एष भर्ता । उपसर्पत्वार्यः । [एदु एदु अय्यो । एसो भट्टा । उपसप्पदु अय्यो ।]

सुमन्त्रः — (उपसृत्य) जयतु कुमारः ।

भरतः — तात, अपि दृष्टस्त्वया लोकाविश्रुतपितृस्नेहः। अपि दृष्टं द्विधाभूत- मरुन्धतीचारित्रम्। अपि दृष्टं त्वया निष्कारणार्वहितवनवास- सौभ्रात्रम्।

(सुमन्त्रः सचिन्तास्तिष्ठति।)

प्रतिहारी — भर्तृदारकः खल्वार्यं पृच्छति। [भट्टिदारओ खु अय्यं पृच्छदि।]

सुमन्त्रः — भवति, किं माम्।

भरतः — (स्वगतम्।) अतिमहान् खल्वायासः। मन्तापाद् भ्रष्टहृदयः (प्रकाशम्।) अपि मार्गात् प्रतिनिवृत्तस्तत्रभवान्।

सुमन्त्रः — कुमार, त्वन्नियोगाद् रामदर्शनार्थं जनस्थानं प्रस्थितः कथमहमन्तरा प्रतिनिवर्तिष्ये।

भरतः — किन्नु खलु क्रोधेन वा लज्जया वात्मानं न दर्शयन्ति।

सुमन्त्रः — कुमार,

**कुतः क्रोधो विनीतानां लज्जा वा कृतचेतसाम्।**
**मया दृष्टं तु तच्छून्यं तैर्विहीनं तपोवनम् ॥ ९ ॥**

भरतः — अथ क्व गता इति श्रुताः।

सुमन्त्रः — अस्ति किल किष्किन्धा नाम वनौकसां निवासः। तत्र गता इति श्रुताः।

भरतः — हन्त अविज्ञातगुरुषविशेषाः खलु वानराः। दुःखिताः प्रतिवसन्ति।

सुमन्त्रः — कुमार, तिर्यग्योनयोऽप्युपकृतमवगच्छन्ति।

भरतः — तात, कथमिव।

सुमन्त्रः —

**सुग्रीवो भ्रंशितो राज्याद् भ्रात्रा ज्येष्ठेन वालिना।**
**हृतदारो वसन्छैले तुल्यदुःखेन मोक्षितः ॥ १० ॥**

भरतः — तात, कथं तुल्यदुःखेन नाम।

सुमन्त्रः — (आत्मगतम्।) हन्त सर्वमुक्तमेव मया। (प्रकाशम्।) कुमार, न खलु किञ्चित्। ऐश्वर्यभ्रंशतुल्यता ममाभिप्रेता।

भरतः — तात, किं गूहसे। स्वर्गं गतेन महाराजपादमूलेन शापितः स्याः, यदि सत्यं न ब्रूयाः।

सुमन्त्रः — का गतिः। श्रूयताम्।

वैरं मुनिजनस्यार्थे रक्षसा महता कृतम्।
सीता मायामुपाश्रित्य रावणेन ततो हृता ॥ ११ ॥

भरतः — कथं हृतेति। (मोहमुपगतः।)

सुमन्त्रः — समाश्वसिहि समाश्वसिहि।

भरतः — (पुनः समाश्वस्य।) भोः कष्टम्।

पित्रा च बान्धवजनेन च विप्रयुक्तो
दुःखं महत् समनुभूय वनप्रदेशे।
भार्यावियोगमुपलभ्य पुनर्ममार्यो
जीमूतचन्द्र इव खे प्रभया वियुक्तः ॥ १२ ॥

भोः किमिदानीं करिष्ये। भवतु दृष्टम्। अनुगच्छतु मां तातः।

सुमन्त्रः — यदाज्ञापयति कुमारः।

(उभौ परिक्रामतः।)

सुमन्त्रः — कुमार, न खलु न खलु गन्तव्यम्। देवीनां चतुश्शालमिदम्

भरतः — अत्रैव मे कार्यम्। भोः, क इह प्रतिहारे।

(प्रविश्य)

प्रतिहारी — जयतु भर्तृदारकः। विजया खल्वहम्। [जेदु भट्टिदारओ। विजआ खु अहं।]

भरतः — विजये, ममागमनं निवेदयात्रभवत्यै।

प्रतिहारी — कतमस्यै भट्टिन्यै निवेदयामि। [कदमाए भट्टिणीए णिवेदेमि।]

भरतः — या मां राजानमिच्छति।

प्रतिहारी — (आत्मगतम्।) हं किं नु खलु भवेत्। [हं किं णु खु भवे।] (प्रकाशम्।) भर्तः, तथा। [भट्टा तह।] (निष्क्रान्ता।)

(ततः प्रविशति कैकेयी प्रतिहारी च)

कैकेयी — विजये, मां प्रेक्षितुं भरत आगतः। [विजए मं पेक्खिदुं भरदो आअदो।]

प्रतिहारी — भट्टिनि तथा। भर्तृदारकस्य रामस्य सकाशात् तातसुमन्त्र आगतः तेन सह भर्तृदारको भरतो भट्टिनीं प्रेक्षितुमिच्छति किल। [भट्टिणि तह। भट्टिदारअस्स रामस्स सआसादो तादसुमन्तो आअदो। तेण सह भट्टिदारओ भरदो भट्टिणिं पेक्खिदु इच्छदि किळ।]

कैकेयी — (स्वगतम्।) केन खलूद्घातेन मामुपालप्स्यते भरतः। [केण खु उग्घादेण मं उवाळम्भिस्सदि भरदो।]

प्रतिहारी — भट्टिनि, किं प्रविशतु भर्तृदारकः। [भट्टिणि किं पविसदु भट्टिदारओ।]

कैकेयी — गच्छ। प्रवेशयैनम्। [गच्छ। पवेसेहि णं।]

प्रतिहारी — भट्टिनि, तथा। [भट्टिणि तह।] (प्रतिक्रम्योपसृत्य) जयतु भर्तृदारकः। प्रविशतु किल। [जेदु भट्टिदारओ। पविसदु किळ।]

भरतः — विजये, किं निवेदितम्।

प्रतिहारी — आम्। [आम।]

भरतः — तेन हि प्रविशावः।

(प्रविशतः।)

कैकेयी — जात, विजया मन्त्रयते—रामस्य सकाशात् सुमन्त्र आगत इति। [जाद विअआ मन्तेदि—रामस्स सआसादो सुमन्तो आअदोत्ति।]

भरतः — अतः परं प्रियं निवेदयाम्यत्रभवत्यै।

कैकेयी — जात, अपि कौसल्या सुमित्रा च शब्दयितव्या। [जाद अवि कोसळ्ळा सुमित्ता अ सद्दावइदव्वा।]

भरतः — न खलु ताभ्यां श्रोतव्यम्।

कैकेयी — (आत्मगतम्।) हं किं नु खलु भवेत्। [हं किं णु हु भवे।] (प्रकाशम्।) भण जात। [भणाहि जाद।]

भरतः — श्रूयताम्।

यः स्वराज्यं परित्यज्य त्वन्नियोगाद् वनं गतः।
तस्य भार्या हृता सीता पर्याप्तस्ते मनोरथः ॥ १३ ॥

कैकेयी — हं।

भरतः —

हन्त भोः सत्वयुक्तानामिक्ष्वाकूणां मनस्विनाम्।
वधूप्रधर्षणं प्राप्तं प्राप्यात्रभवतीं वधूम् ॥ १४ ॥

कैकेयी — (आत्मगतम्।) भवतु, इदानीं कालः कथयितुम्। (प्रकाशम्।) जात, त्वं न जानासि महाराजस्य शापम्। [भोदु दाणि काळो कहेउं। जाद तुवं ण आणासि महाराअस्स सावं।]

भरतः — किं शप्तो महाराजः।

कैकेयी — सुमन्त्र, आचक्ष्व विस्तरेण। [सुमन्त आअक्ख वित्थरेण।]

सुमन्त्रः — यदाज्ञापयति भवती। कुमार, श्रूयताम्—पुरा मृगयागतेन महाराजेन कस्मिंश्चित् सरसि कलशं पूरयमाणो वनगजबृंहितानुकारिशब्दसमुत्पन्न-वनगजशङ्कया शब्दवेधिना शरेण विपन्नचक्षुषो महर्षेश्चक्षुर्भूतो मुनितनयो हिंसितः।

भरतः — हिंसित इति। शान्तं पापं शान्तम्। ततस्ततः।

सुमन्त्रः — ततस्तमेवं गतं दृष्ट्वा

तेनोक्तं रुदितस्यान्ते मुनिना सत्यभाषिणा।
यथाहं भोस्त्वमप्येवं पुत्रशोकाद् विपत्स्यसे ॥ १५ ॥

इति।

भरतः — नन्विदं कष्टं नाम।

कैकेयी — जात, एतन्निमित्तमपराधे मां निक्षिप्य पुत्रको रामो वनं प्रेषितः। न खलु राज्यलोभेन। अपरिहरणीयो महर्षिशापः पुत्रविप्रवासं विना न भवति। [जात एदण्णिमित्तं अवरोहे मं णिक्खिविअ पुत्तओ रामो वणं पेसिदो। ण हु रज्जळोहेण। अपरिहरिणीओ महरिसिसावो पुत्तविप्पवासं विणा ण होइ।]

भरतः — अथ तुल्ये पुत्रविप्रवासे कथमहमरण्यं न प्रेषितः।

कैकेयी — जात, मातुलकुले वर्तमानस्य प्रकृतिभूतस्ते विप्रवासः। [जाद माडुळकुळे वत्तमाणस्स पइदीहूदो दे विप्पवासो।]

भरतः — अथ चतुर्दश वर्षाणि किं कारणमवेक्षितानि।

कैकेयी — जात, चतुर्दश दिवसा इति वक्तुकामया पर्याकुलहृदया चतुर्दश वर्षाणी-त्युक्तम्। [जाद चउद्दस दिअस त्ति वत्तुकामाए पय्याउळहिअआए चउद्दस वरिसाणि त्ति उत्तं।]

भरतः — अस्ति पाण्डित्यं सम्यग् विचारयितुम् । अथ विदितमेतद् गुरुजनस्य

सुमन्त्रः — कुमार, वसिष्ठवामदेवप्रभृतीनामनुमतं विदितं च ।

भरतः — हन्त त्रैलोक्यसाक्षिणः खल्वेते । दिष्ट्याऽनपराद्धात्रभवती । अम्ब यद् भ्रातृस्नेहात् समुत्पन्नमन्युना मया दूषितात्रभवती तत् मर्षयितव्यम् । अम्ब, अभिवादये ।

कैकेयी — जात, का नाम माता पुत्रकस्यापराधं न मर्षयति । उत्तिष्ठोत्तिष्ठ कोऽत्र दोषः । [जाद का णाम मादा पुत्तअस्स अवराहं ण मरिसेदि उट्ठेहि उट्ठेहि । को एत्थ दोसो ।]

भरतः — अनुगृहीतोऽस्मि । आपृच्छाम्यत्रभवतीम् । अद्य तावदमात्यस्य माहात्म्यात् कृत्स्नं राजमण्डलमुद्योजयामि । अयमिदानीं

वेलामिमां मत्तगजान्धकारां
करोमि सैन्यौघनिवेशनद्धाम् ।
बलैस्तरद्भिश्च नयामि तुल्यं
ग्लानिं समुद्रं सह रावणेन ॥ १६ ॥

अये शब्द इव । तूर्णं ज्ञायतां शब्दः ।

(प्रविश्य ।)

प्रतिहारी — जयतु कुमारः । इमं वृत्तान्तं श्रुत्वा ज्येष्ठभट्टिनी मोहं गता । [जेदु कुमारो । इमं वुत्तन्तं सुणिअ जेट्ठभट्टिणी मोहं गआ ।]

कैकेयी — हं ।

भरतः — कथं मोहमुपगताम्बा ।

कैकेयी — एहि जात । आर्यामाश्वासयिष्यावः । [एहि जाद । अय्यं अस्सास-इस्सामो ।]

भरतः — यदाज्ञापयत्यम्बा ।

(निष्क्रान्ताः सर्वे ।)

षष्ठोऽङ्कः ।

# सप्तमोऽङ्कः

(ततः प्रविशति तापसः।)

**तापसः**— नन्दिलक नन्दिलक।

(प्रविश्य।)

**नन्दिलकः**— आर्य, अयमस्मि। [अय्य अअं ह्मि।]

**तापसः**— नन्दिलक, कुलपतिर्विज्ञापयति—एष खलु स्वदारापहारिणं त्रैलोक्यविद्रावणं रावणं नाशयित्वा राक्षसगणविरुद्धवृत्तं गुणगणविभूषणं विभीषणमभिषिच्य देवदेवर्षिसिद्धविमलचारित्रां तत्रभवतीं सीतामादाय ऋक्षराक्षसवानरमुख्यैः परिवृतः सम्प्राप्तस्तत्रभवान् शरद्विमलगगनचन्द्राभिरामो रामः। तदद्यास्मिन्नाश्रमपदेऽस्मद्विभवेन यत् सङ्कल्पयितव्यं तत् सर्वं सज्जीक्रियताम् इति।

**नन्दिलकः**— आर्य, सर्वं सज्जीकृतम्। किन्तु [अय्य सव्वं सज्जीकिदं। किन्तु—]

**तापसः**— किमेतत्।

**नन्दिलकः**— अत्र विभीषणसम्बन्धिनो राक्षसाः। तेषां भक्षणनिमित्तं कुलपतिः प्रमाणम्। [एत्थ विभीसणकेरआ रक्खसा। तेसं भक्खणणिमित्तं कुळवदी पमाणं।]

**तापसः**— किमर्थम्।

**नन्दिलकः**— ते खलु खादन्ति। [ते खु खज्जन्ति।]

**तापसः**— अलमलं सम्भ्रमेण। विभीषणविधेयाः खलु राक्षसाः।

**नन्दिलकः**— नमो राक्षससज्जनाय। [णमो रक्खससज्जणाअ।] (निष्क्रान्तः।)

**तापसः**— (विलोक्य) अये, अयमत्रभवान् राघवः। य एष

> **जय नरवर जयः स्याद् द्वितीयस्तवारि-**
> **स्तव भवतु विधया भूमिरेकातपत्रा।**
> **इति मुनिभिरनेकैः स्तूयमानः प्रसन्नैः**
> **क्षितितलमवतीर्णो मानवेन्द्रो विमानात्** ॥ १ ॥

जयतु भवान् जयतु। (निष्क्रान्तः।)

**मिश्रविष्कम्भकः।**

(ततः प्रविशति रामः ।)

**रामः** — भोः ।

**समुदितबलवीर्यं रावणं नाशयित्वा**
**जगति गुणसमग्रां प्राप्य सीतां विशुद्धाम् ।**
**वचनमपि गुरूणामन्तशः पूरयित्वा**
**मुनिजनवनवासं प्राप्तवानस्मि भूयः ॥ २ ॥**

तापसीनामभिवन्दनार्थमभ्यन्तरं प्रविष्टा चिरायते खलु मैथिली । (विलोक्य ।) अये, इयं वैदेही ।

**सखीति सीतेति च जानकीति**
**यथावयः स्निग्धतरं स्नुषेति ।**
**तपस्विदारैर्जनकेन्द्रपुत्री**
**सम्भाष्यमाणा समुपैति मन्दम् ॥ ३ ॥**

(ततः प्रविशति सीता तापसी च ।)

**तापसी** — हला, एष ते कुटुम्बिकः । उपसर्पनम् । न शक्य त्वामेकाकिनीं प्रेक्षितुम् । [हळा एसो दे कुडुम्बिओ । उवसप्प णं । ण सक्कं तुमं एआइणिं पेक्खिदुं ।]

**सीता** — हम् । अद्याप्यविश्वसनीयमिव मे प्रतिभाति । (उपसृत्य ।) जयत्वार्यपुत्रः । [हं । अज्जवि अविस्ससणीअं विअ मे पडिभादि । जेदु अय्यउत्तो ।]

**रामः** — मैथिलि, अपि जानासि पूर्वाधिष्ठानमस्माकं जनस्थानमासीत । अप्यत्र ज्ञायन्ते पुत्रकृतका वृक्षाः ।

**सीता** — जानामि जानामि अवलोकितपत्रका उल्लोकयितव्या इदानीं संवृत्ताः । [जाणामि जाणामि आळोइअपत्तआ उळ्ळोअइदव्वा दाणि संवुत्ता ।]

**रामः** — एवमेतत् । निम्नस्थलोत्पादको हि कालः । मैथिलि, अभ्युपलभ्यतेऽस्य सप्तवर्णस्याधस्ताच्छुक्लवामम भरत दृष्ट्वा परित्रस्तं मृगयूथमासीत् ।

**सीता** — आर्यपुत्र, दृढं खलु स्मरामि । [अय्यउत्त दिढ खु सुमरामि ।]

**रामः** — अयं तु नस्तैतपसः साक्षिभूतो महाकच्छः । अत्रास्माभिरामीनैस्नातस्य निवपनक्रियां चिन्तयद्भिः काञ्चनपार्श्वो नाम मृगो दृष्टः ।

सीता — हम् आर्यपुत्र, मा खलु मा खल्वेवं भणितुम्। [हं अय्यउत्त। मा खु मा खु एवं भणिदुं।] (भीता वेपते।)

रामः — अलमलं सम्भ्रमेण। अतिक्रान्तः खल्वेष कालः। (दिशो विलोक्य।) अये कुतो नु,

रेणुः समुत्पतति लोध्रसमानगौरः
सम्प्रावृणोति च दिशः पवनावधूतः।
शङ्खध्वनिश्च पटहस्वनधीरनादैः
सम्मूर्छितो वनमिदं नगरीकरोति ॥ ४ ॥

(प्रविश्य।)

लक्ष्मणः — जयत्वार्यः। आर्य,

अयं सैन्येन महता त्वद्दर्शनसमुत्सुकः।
मातृभिः सह सम्प्राप्तो भरतो भ्रातृवत्सलः ॥ ५ ॥

रामः — वत्स लक्ष्मण, किमेवं भरतः प्राप्तः।

लक्ष्मणः — आर्य, अथ किम्।

रामः — मैथिलि, श्वश्रूजनपुरोगं भरतमवलोकयितुं विशालीक्रियतां ते चक्षुः।

सीता — आर्यपुत्र, एष्टव्ये काले भरत आगतः। [अय्यउत्त इच्छिदव्वे काळे भरदो आअदो।]

(ततः प्रविशति भरतः समातृकः।)

भरतः —

तैस्तैः प्रवृद्धविषयैर्विषमैर्विमुक्तं
मेघैर्विमुक्तममलं शरदीव सोमम्।
आर्यासहायमहमद्य गुरुं दिदृक्षुः
प्राप्तोस्मि तुष्टहृदयः स्वजनानुबद्धः ॥ ६ ॥

रामः — अम्बाः, अभिवादये।

सर्वाः — जात, चिरं जीव। दिष्टया वर्धामहे अवसितप्रतिज्ञं त्वां कुशलिनं सह वध्वा प्रेक्ष्य। [जाद चिरं जीव। दिट्ठिआ वड्ढामो अवसिदपडिण्णं तुमं कुसळिणं सह वहूए पेक्खिअ।]

रामः — अनुगृहीतोऽस्मि।

लक्ष्मणः — अम्बाः, अभिवादये।

सर्वाः — जात, चिरं जीव। [जाद चिरं जीव।]

लक्ष्मणः — अनुगृहीतोऽस्मि।

सीता — आर्याः, वन्दे। [अय्या वन्दामि।]

सर्वाः — वत्से, चिरमङ्गला भव। [वच्छे चिरमङ्गळा होहि।]

सीता — अनुगृहीतास्मि। [अणुग्गहिदह्मि।]

भरतः — आर्य, अभिवादये भरतोऽहमस्मि।

रामः — एह्येहि वत्स, इक्ष्वाकुकुमार। स्वस्ति। आयुष्मान् भव।

वक्षः प्रसारय कवाटपुटप्रमाण-
मालिङ्ग मां सुविपुलेन भुजद्वयेन।
उन्नामयाननमिदं शरदिन्दुकल्पं
प्रह्लादय व्यसनदग्धमिदं शरीरम् ॥ ७ ॥

भरतः — अनुगृहीतोऽस्मि। आर्ये, अभिवादये भरतोऽहमस्मि।

सीता — आर्यपुत्रेण चिरसञ्चारी भव। [अय्यउत्तेण चिरसञ्चारी होहि।]

भरतः — अनुगृहीतोऽस्मि। आर्य, अभिवादये।

लक्ष्मणः — एह्येहि वत्स, दीर्घायुर्भव। परिष्वजस्व गाढम्। (आलिङ्गति।)

भरतः — अनुगृहीतोऽस्मि। आर्य, प्रतिगृह्यतां राज्यभारः।

रामः — वत्स, कथमिव।

कैकेयी — जात, चिराभिलषितः खल्वेष मनोरथः। [जाद चिराहिळसिदो ख्खु एसो मणोरहो।]

(ततः प्रविशति शत्रुघ्नः।)

शत्रुघ्नः —

विविधैर्व्यसनैः क्लिष्टमक्लिष्टगुणतेजसम्।
द्रष्टुं मे त्वरते बुद्धी रावणान्तकरं गुरुम्। ॥ ८ ॥

(उपगम्य।) आर्य, शत्रुघ्नोऽहमभिवादये।

रामः — एह्येहि वत्स। स्वस्ति आयुष्मान् भव।

**शत्रुघ्नः** — अनुगृहीतोऽस्मि। आर्ये, अभिवादये।

**सीता** — वत्स, चिरं जीव। [वच्छ चिरं जीव।]

**शत्रुघ्नः** — अनुगृहीतोऽस्मि। आर्य, अभिवादये।

**लक्ष्मणः** — स्वस्ति आयुष्मान् भव।

**शत्रुघ्नः** — अनुगृहीतोऽस्मि। आर्य, एतौ वसिष्ठवामदेवौ सह प्रकृतिभिरभिषेकं पुरस्कृत्य त्वद्दर्शनमभिलषतः।

**तीर्थोदकेन मुनिभिः स्वयमाहृतेन**
**नानानदीनदगतेन तव प्रसादात्।**
**इच्छन्ति ते मुनिगणाः प्रथमाभिषिक्तं**
**द्रष्टुं मुखं सलिलसिक्तमिवारविन्दम्।** ॥ ९ ॥

**कैकेयी** — गच्छ जात। अभिलषाभिषेकम्। [गच्छ जाद। अभिळसेहि अभिसेअं।]

**रामः** — यदाज्ञापयत्यम्बा। (निष्क्रान्तः।)

(नेपथ्ये)

जयतु भवान्। जयतु स्वामी। जयतु महाराजः। जयतु देवः। जयतु भद्रमुखः। जयत्वार्यः। जयतु रावणान्तकः।

**कैकेयी** — एते पुरोहिताः कञ्चुकिनः पुत्रकस्य मे विजयघोषं वर्धयन्त आशीर्भिः पूजयन्ति। [एदे पुरोहिदा कञ्चुइणो पुत्तअस्स मे विजयघोसं वड्ढअन्तो आसीहि पूजअन्ति।]

**सुमित्रा** — प्रकृतयः परिचारकाः सज्जनाश्च पुत्रकस्य मे विजयं वर्धयन्ति। [पइदीओ परिचारआ सज्जणा अ पुत्तअस्स मे विजअं वड्ढअन्ति।]

(नेपथ्ये)

भो भो जनस्थानवासिनस्तपस्विनः, शृण्वन्तु शृण्वन्तु भवन्तः।

**हत्वा रिपुप्रभवमप्रतिमं तमोघं**
**सूर्योऽन्धकारमिव शौर्यमयैर्मयूखैः।**
**सीतामवाप्य सकलाशुभवर्जनीयां**
**रामो महीं जयति सर्वजनाभिरामः।** ॥ १० ॥

कैकेयी — अम्महे, पुत्रस्य मे विजयघोषणा वर्धते। [अम्महे पुत्तस्स मे विजअघोसणा वड्ढइ।]

(ततः प्रविशति कृताभिषेको रामः सपरिवारः।)

रामः — (विलोक्याकाशे।) भोस्तात,

स्वर्गेऽपि तुष्टिमुपगच्छ विमुञ्च दैन्यं
कर्म त्वयाभिलषितं मयि यत् तदेतत्।
राजा किलास्मि भुवि सत्कृतभारवाही
धर्मेण लोकपरिरक्षणमभ्युपेतम्। ॥ ११ ॥

भरतः —

अधिगतनृपशब्दं धार्यमाणातपत्रं
विकसितकृतमौलिं तीर्थतोयाभिषिक्तम्।
गुरुमधिगतलीलं बन्धुभानं जनौघै-
र्नवशशिनमिवार्यं पश्यतो मे न तृप्तिः। ॥ १२ ॥

शत्रुघ्नः —

एतदार्याभिषेकेण कुलं मे नष्टकल्मषम्।
पुनः प्रकाशतां याति सोमस्येवोदये जगत्। ॥ १३ ॥

रामः — वत्स लक्ष्मण, अधिगतराज्योऽहमस्मि।

लक्ष्मणः — दिष्टया भवान् वर्धते।

(प्रविश्य।)

काञ्चुकीयः —जयतु महाराजः। एष खलु तत्रभवान् बिभीषणो विज्ञापयति। सुग्रीवनीलमैन्दजाम्बवद्धनूमत्प्रमुखाश्चानुगच्छन्तो विज्ञापयन्ति–दिष्टया भवान् वर्धत इति।

रामः — सहायानां प्रसादाद् वर्धत इति कथ्यताम्।

काञ्चुकीयः —यदाज्ञापयति महाराजः।

कैकेयी — धन्या खल्वस्मि। इदमभ्युदयमयोध्यायां प्रेक्षितुमिच्छामि। [धण्णा खु ह्मि। इदं अब्भुदअं अओज्झाअं पेक्खिदुं इच्छामि।]

**रामः** — द्रक्ष्यति भवती। (विलोक्य।) अये प्रभाभिर्वनमिदमखिलं सूर्यवत् प्रतिभाति। (विभाव्य) आ ज्ञातम्। सम्प्राप्तं पुष्पकं दिवि रावणस्य विमानम्। कृतसमयमिदं स्मृतमात्रमुपगच्छतीति। तत् सर्वैरारुह्यताम्।

(सर्वे आरोहन्ति)

**रामः** —

अद्यैव यास्यामि पुरीमयोध्यां
सम्बन्धिमित्रैरनुगम्यमानः।

**लक्ष्मणः** —

अद्यैव पश्यन्तु नागरास्त्वां
चन्द्रं सनक्षत्रमिवोदयस्थम् ॥ १४ ॥

(भरतवाक्यम्।)

यथा रामश्च जानक्या बन्धुभिश्च समागतः।
तथा लक्ष्म्या समायुक्तो राजा भूमिं प्रशास्तु नः ॥ १५ ॥

(निष्क्रान्ताः सर्वे।)

सप्तमोऽङ्कः।

**प्रतिमानाटकं समाप्तम्॥**

# ಟಿಪ್ಪಣಿಗಳು

**ಪ್ರತಿಮಾನಾಟಕಮ್** – ಮೂರನೆಯ ಅಂಕದಲ್ಲಿ ಬರುವ ಮನೋಜ್ಞವೂ ಅವಿಸ್ಮರಣೀಯವೂ ಆದ ಪ್ರತಿಮಾಗೃಹದೃಶ್ಯದಿಂದ ಈ ನಾಟಕಕ್ಕೆ 'ಪ್ರತಿಮಾ-ನಾಟಕಮ್' ಎಂದು ಹೆಸರು ಬಂದಿದೆ. ಈ ಪ್ರತಿಮಾಗೃಹದೃಶ್ಯ ಸಮಗ್ರ ನಾಟಕದ ಕೇಂದ್ರಬಿಂದುವಾಗಿರುವುದಲ್ಲದೆ ಕವಿಯ ಉನ್ನತ ಕಲಾಪ್ರೌಢಿಮೆಯ ಸುಂದರ ಅಭಿವ್ಯಕ್ತಿಯೂ ಆಗಿ ನಾಟಕದ ಹೆಸರನ್ನು ಸಾರ್ಥಕಗೊಳಿಸಿದೆ.

प्रतिमाप्रधानं प्रतिमालक्षणं वा नाटकम् प्रतिमानाटकम् ।

## ಅಂಕ ೧

**ಸ್ಥಳ** — ಅಯೋಧ್ಯೆಯ ಅರಮನೆ: ಮೊದಲಿನ ಭಾಗದಲ್ಲಿ ಕಂಚುಕಿಯಿರುವ ಸ್ಥಳ; ಅನಂತರ ಸೀತಾದೇವಿಯ ಅಂತಃಪುರ.

**ಕಾಲ** — ಚೈತ್ರ ಶುಕ್ಲ ದಶಮಿಯ ದಿನ ; ಪ್ರಾತಃಕಾಲ.

**ಪುಟ 1**

**नान्द्यन्ते....सूत्रधारः** — ಭಾಸನದೆಂದು ಹೇಳಲಾದ ಎಲ್ಲ ರೂಪಕಗಳೂ ಈ ರಂಗಸೂಚನೆಯಿಂದಲೇ ಪ್ರಾರಂಭವಾಗುತ್ತವೆ. ಇದರಲ್ಲಿ 'अन्ते' ಮತ್ತು 'ततः' ಎಂಬ ಎರಡು ಪದಗಳೂ ಬರುವುದು ಒಂದು ವೈಶಿಷ್ಟ್ಯ (ಪೀಠಿಕೆಯನ್ನು ನೋಡಿ). ಇಲ್ಲಿ 'नान्दी' ಎನ್ನುವುದನ್ನು 'पूर्वरङ्गनान्दी' ಎಂದು ಭಾವಿಸಿಕೊಳ್ಳಬೇಕು. ಇದನ್ನು ವಾದ್ಯ ಸಂಗೀತಗಳೊಡನೆ ತೆರೆಯ ಹಿಂದೆ ಆಚರಿಸುತ್ತಾರೆ. ನಾಟಕಪ್ರದರ್ಶನದಲ್ಲಿ ಒದಗಬಹುದಾದ ವಿಘ್ನಗಳನ್ನು ಪರಿಹರಿಸಿಕೊಳ್ಳಲು ನಟರೂ ವಾದ್ಯವೃಂದದವರೂ ನಾಟಕ ಪ್ರಾರಂಭವಾಗುವ ಮುನ್ನ ಮಾಡುವ ದೇವರ ಪೂಜೆಯೇ 'ಪೂರ್ವ ರಂಗ ನಾಂದೀ'. ಇದಾದಮೇಲೆ ಸೂತ್ರಧಾರನು ಪ್ರವೇಶಿಸಿ ಒಂದು 'ನಾಂದೀ' ಅಥವಾ 'ಮಂಗಳ' ಶ್ಲೋಕವನ್ನು ಇಷ್ಟದೇವತೆಯನ್ನುದ್ದೇಶಿಸಿ ಪ್ರೇಕ್ಷಕರ ಮುಂದೆ ಪಠಿಸುತ್ತಾನೆ. ಇದು ಭಾಸನ ನಾಟಕಗಳ ಒಂದು ವೈಶಿಷ್ಟ್ಯ. ಇದರಿಂದ ಭಾಸನ ನಾಟಕಗಳನ್ನು 'ಸೂತ್ರಧಾರಕೃತಾರಂಭ'ಗಳೆಂದು ಕ್ರಿ.ಶ. 7ನೆಯ ಶತಮಾನದಲ್ಲಿದ್ದ ಬಾಣಭಟ್ಟನು ತನ್ನ ಹರ್ಷಚರಿತೆಯ ಉಪೋದ್ಘಾತದ ಒಂದು ಶ್ಲೋಕದಲ್ಲಿ ಸೂಚಿಸಿದ್ದಾನೆ (ವಿವರಗಳಿಗೆ ಪೀಠಿಕೆಯನ್ನು ನೋಡಿ). ಇಷ್ಟದೇವತೆಯನ್ನು ಆನಂದಗೊಳಿಸಿ ಪ್ರಸ್ತುತ ನಾಟಕವು 'ಸಿದ್ಧಿ'ಗೊಳ್ಳುವಂತೆ ಪ್ರಾರ್ಥಿಸುವುದೇ ನಾಂದಿಯ ಉದ್ದೇಶ. ಪಂಡಿತ ಗಣಪತಿಶಾಸ್ತ್ರಿಗಳು 'नन्दिः आनन्दः । तस्या इयं नान्दी गीतवाद्यवादनादि-क्रिया' ಎಂದು ಮೇಲಿನ ರಂಗಸೂಚನೆಯಲ್ಲಿ ಬರುವ नान्दी ಶಬ್ದಕ್ಕೆ ವ್ಯಾಖ್ಯಾನಮಾಡಿ

ದ್ದಾರೆ. ಸಾಧಾರಣವಾಗಿ ರೂಪಕಗಳ ಪ್ರಾರಂಭದಲ್ಲಿ ಪಠಿಸಲ್ಪಡುವ ದೇವತಾ ಸ್ತು ಯನ್ನು ನಾನ್ದೀ ಎಂದು ಕರೆಯುವುದು ರೂಢಿ. ಈ 'ನಾಂದೀ' ಪದವು ಗಣಪತಿಪಾ ಗಳ ಪ್ರಕಾರ नन्दिः आनन्दः, तस्या इयं ಎಂದಾಗಬಹುದು. ಅಥವಾ नन्द ಆನಂ ಕೊಡು ಎಂಬ ಧಾತುವಿನಿಂದ ಬಂದಿರಬಹುದು. ಈ ನಾಂದೀಪಠನೆಯಿಂದ ದೇವ ಗಳು, ದ್ವಿಜರು, ಕವಿಗಳು, ಸಹೃದಯರು, ಪ್ರೇಕ್ಷಕರು ಮತ್ತು ನಟರು—ಎಲ್ಲರಿಗ ಹರ್ಷವುಂಟಾಗುತ್ತದೆ. ಆದುದರಿಂದ ಇದಕ್ಕೆ ನಾನ್ದೀ ಎಂಬ ಹೆಸರು ಬಂದಿತೆಂದ ಕೆಲವರ ಮತ. ಮತ್ತೆ ಕೆಲವರು ಆದಿನಟನೂ ನಟರಾಜನೂ ಆದ ಪರಶಿವನು ತನ ಪ್ರಥಮ ತಾಂಡವನೃತ್ಯವನ್ನು ತನ್ನ ವಾಹನವಾದ ವೃಷಭ ನಂದಿಯ ಮೇಲೆ ಪ್ರದರ್ಶಿಸಿ ನೆಂದೂ ಆ ನಂದಿಯ ಗೌರವಾರ್ಥ ನಾಟಕದ ಮಂಗಳ ಶ್ಲೋಕವನ್ನು ನಾಂದೀ ಎಂದ ಕರೆಯಲಾಗಿದೆಯೆಂದೂ ಅಭಿಪ್ರಾಯಪಡುತ್ತಾರೆ.

**सूत्रधारः** — ಸಮಗ್ರ ನಾಟಕದ ಜವಾಬ್ದಾರಿಯನ್ನು ಹೊತ್ತ ವ್ಯಕ್ತಿ. ನಾಟಕದ ಆವಶ್ಯಕವಾದ ಉಪಕರಣಗಳಾವುವು, ನಾಟಕದಲ್ಲಿ ಯಾರು ಯಾರು ಯಾವ ಯಾ ಪಾತ್ರ ವಹಿಸಿ ಹೇಗೆ ಅಭಿನಯಿಸಬೇಕು, ನಾಟಕವನ್ನು ಎಂದು ಎಲ್ಲಿ ಪ್ರದರ್ಶಿಸಬೇಕು ಇತ್ಯಾದಿ ವಿಷಯಗಳನ್ನು ನಿರ್ಧರಿಸುವ ಜವಾಬ್ದಾರಿ ಪಡೆದ ಮುಖ್ಯ ನಿರ್ವಾಹಕ.

**ಶ್ಲೋಕ 1** (ಉಪಜಾತಿ) — ಇದು ಸೂತ್ರಧಾರನು ಪ್ರೇಕ್ಷಕರ ಸಮಕ್ಷಮ ದಲ್ಲಿ ಪಠಿಸಿರುವ ಮಂಗಳ ಅಥವಾ ನಾಂದೀ ಶ್ಲೋಕ. ಮಂಗಳಶ್ಲೋಕವು ಆಶೀರ್ವಚನ, ನಮಸ್ಕಾರ ಅಥವಾ ವಸ್ತುನಿರ್ದೇಶವನ್ನು ಒಳಗೊಂಡಿರಬಹುದೆಂದು (आशीर्नमस्क्रियावस्तुनिर्देशो वापि तन्मुखम्) ಲಾಕ್ಷಣಿಕರು ಹೇಳುತ್ತಾರೆ. ಪ್ರಸ್ತುತ ಶ್ಲೋಕವು "सीताभवः····पातु" ಎಂಬ ಆಶೀಃ ರೂಪದಲ್ಲಿರುವುದಲ್ಲದೆ ಸೀತಾ, ಸುಮಂತ್ರ, ಸುಗ್ರೀವ, ರಾಮ, ಲಕ್ಷ್ಮಣ, ರಾವಣ, ವಿಭೀಷಣ ಮತ್ತು ಭರತ ಈ ಹೆಸರುಗಳನ್ನೂ ಒಳಗೊಂಡಿರುವುದರಿಂದ ವಸ್ತುನಿರ್ದೇಶಾತ್ಮಕವೂ ಆಗಿದೆ. ಶ್ಲೇಷಾರ್ಥ ಕೊಡುವ ಈ ಪದಗಳನ್ನು ಕವಿಯು ಕೌಶಲದಿಂದ ಉಪಯೋಗಿ ಮುದ್ರಾಲಂಕಾರವನ್ನು ತಂದಿದ್ದಾನೆ. 'सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः' ಅಂದರೆ ಪ್ರಕೃತ ಇಷ್ಟದೇವತೆಯ ಪ್ರಾರ್ಥನೆಯನ್ನೊಳಗೊಂಡ ನಾಂದೀ ಶ್ಲೋಕ ದಲ್ಲಿ ಆ ನಾಟಕದ ಪ್ರಧಾನ ಪಾತ್ರಗಳ ಹೆಸರುಗಳನ್ನೂ ಶಬ್ದಚಮತ್ಕಾರದಿಗಳಿಂದ ಸೂಚಿಸುವುದೇ ಮುದ್ರಾಲಂಕಾರವೆನಿಸುತ್ತದೆ. ಪ್ರಸಕ್ತ ಶ್ಲೋಕದಲ್ಲಿ ನಾಟಕದ ಎಂಟು ಪಾತ್ರಗಳ ಹೆಸರುಗಳೇ ಅಲ್ಲದೆ ಪ್ರಧಾನ ದೃಶ್ಯವಾದ 'ಪ್ರತಿಮೆ'ಯೂ ಜಾಣ್ಮೆ ಯಿಂದ ಯೋಜಿತವಾಗಿದೆ. ಒಟ್ಟು ಶ್ಲೋಕವು ಇಷ್ಟದೇವತೆಯಾದ ಶ್ರೀರಾಮನ ಸ್ತುತಿಯೂ ಆಗಿದೆ. ಇಂತಹ ಮುದ್ರಾಲಂಕಾರವನ್ನೊಳಗೊಂಡ ಮಂಗಳ ಅಥವಾ ನಾಂದೀ ಶ್ಲೋಕವು ಇದೇ ಕವಿಯ ಪಂಚರಾತ್ರ, ಊರುಭಂಗ, ಪ್ರತಿಜ್ಞಾಯೌಗಂಧ ರಾಯಣ ಮತ್ತು ಸ್ವಪ್ನವಾಸವದತ್ತಗಳಲ್ಲಿಯೂ ಬರುತ್ತವೆ.

(i) यः देव्या रावणार्यप्रतिमः विभीषणात्मा च (बभूव) सः सीताभवः सुमन्त्रतुष्टः सहलक्ष्मणः भरतः च सुग्रीवरामः अनुसर्गं (अस्मान् युष्मांश्च) पातु। ಅಥವಾ (ii) यः अविभीषणात्मा (अपि) रावणार्यप्रतिमः (बभूव) सः सीताभवः सुमन्त्रतुष्टः सहलक्ष्मणः भरतः च सुग्रीवरामः देव्या (सह) (अस्मान् युष्मान् च) अनुसर्गं पातु।

(i) ಯಾರು ಸೀತೆಯ ಕಾರಣದಿಂದ ರಾವಣನಿಗೆ ಅಪ್ರತಿಮ ವೈರಿಯಾಗಿ ವಿಭೀಷಣನನ್ನು ತನ್ನ ಆತ್ಮವೆಂದು ಭಾವಿಸಿದನೋ ಅಂತಹ ಸೀತಾಕ್ಷೇಮಕಾರಣನೂ ಸತ್ಸಲಹೆಗಳಿಂದ (ಅಥವಾ ವೈದಿಕ ಮಂತ್ರಗಳಿಂದ ಅಥವಾ ಸುಮಂತ್ರನಿಂದ) ಸಂತುಷ್ಟನೂ ಲಕ್ಷ್ಮಣನಿಂದ ಕೂಡಿದವನೂ ಲೋಕರಕ್ಷಕನೂ ಆದ ಸುಂದರವಾದ ಕತ್ತಿನಿಂದ ಶೋಭಿಸುವ ಶ್ರೀರಾಮನು ನಮ್ಮನ್ನೂ ನಿಮ್ಮನ್ನೂ ಜನ್ಮಜನ್ಮಗಳಲ್ಲಿಯೂ ರಕ್ಷಿಸಲಿ. ಅಥವಾ (ii) ಯಾರು ಭೀಷಣವಾದ ಆತ್ಮನಲ್ಲದಿದ್ದರೂ ರಾವಣನ ಅಪ್ರತಿಮ ವೈರಿಯಾದನೋ ಅಂತಹ ಸೀತಾಕ್ಷೇಮಕರನೂ ಸುಮಂತ್ರಸಂತುಷ್ಟನೂ ಲಕ್ಷ್ಮಣನೊಡಗೂಡಿದವನೂ ಸಕಲ ಲೋಕರಕ್ಷಕನೂ ಸುಂದರ ಕತ್ತುಳ್ಳವನೂ ಆದ ಶ್ರೀರಾಮನು ಸೀತಾದೇವಿಯೊಡನೆ ನಮ್ಮನ್ನೂ ನಿಮ್ಮನ್ನೂ ಜನ್ಮಜನ್ಮಾಂತರಗಳಲ್ಲಿಯೂ ಪಾಲಿಸಲಿ.

**सीताभवः** — ಸೀತಾದೇವಿಯ ಕ್ಷೇಮಕ್ಕೆ ಕಾರಣನು ಅಥವಾ ಪತಿಯಾಗಿ ಸೀತಾದೇವಿಯ ಸಮಸ್ತ ಕಲ್ಯಾಣಕ್ಕೂ ಮೂಲಕಾರಣನು. 'भव' ಎಂಬ ಪದಕ್ಕೆ ಇಲ್ಲಿ 'ಕ್ಷೇಮ' ಎಂದಾಗಲೀ 'ಭವಾಪ್ತಿ' ಎಂದಾಗಲೀ ಅರ್ಥಮಾಡಬಹುದು; ಏಕೆಂದರೆ 'भवः क्षेमे च संसारे सत्तायां प्राप्तिजन्मनोः' ಎಂದೂ 'भवो भद्राप्तिसत्तयोः' ಎಂದೂ ನಾನಾರ್ಥಕೋಶಗಳಲ್ಲಿ ಹೇಳಿದೆ.

सीताया भवः यस्मात् सः सीताभवः।

**सुमन्त्रतुष्टः** — ಒಳ್ಳೆಯ ಸಲಹೆಗಳಿಂದ ಅಥವಾ ಸಮೀಚೀನ ವೇದಮಂತ್ರಗಳಿಂದ ಅಥವಾ ಮಂತ್ರಿಯೂ ಸಾರಥಿಯೂ ಆಗಿ ಇಕ್ಷ್ವಾಕು ಕುಲದ ಅಭಿವೃದ್ಧಿಗಾಗಿ ಶ್ರಮಿಸಿದ ಸುಮಂತ್ರನೆಂಬುವನಿಂದ ಸಂತುಷ್ಟನಾದವನು.

शोभनेन मन्त्रेण शोभनया मन्त्रालोचनया वा तदाख्येन पितुः सारथिना वा (सं)तुष्टः प्रीतः (ತೃತೀಯಾತತ್ಪುರುಷ ಸಮಾಸ).

**सुग्रीवरामः** — ಸುಂದರವಾದ ಕತ್ತಿನಿಂದ ಶೋಭಿಸುವ ಶ್ರೀರಾಮನು. ಶ್ರೀಮದ್ವಾಲ್ಮೀಕಿ ರಾಮಾಯಣದಲ್ಲಿ ಶ್ರೀರಾಮನನ್ನು कम्बुग्रीवः ಅಂದರೆ ಶಂಖದಂತೆ ಸುಂದರ ರೂಪಿನ ಕತ್ತನ್ನು ಪಡೆದವನೆಂದು ಅನೇಕ ಸಲ ವರ್ಣಿಸಿದೆ. ಕವಿ, ಚಮತ್ಕಾರದಿಂದ ಸುಗ್ರೀವನ ಹೆಸರನ್ನು ಹೀಗೆ ಸೂಚಿಸಿದ್ದಾನೆ. ಆದರೆ ನಾಟಕದಲ್ಲಿ ಅವನು ಕಾಣಿಸಿಕೊಳ್ಳುವುದಿಲ್ಲ.

शोभना ग्रीवा यस्य सः सुग्रीवः (ಬಹುವ್ರೀಹಿ) सुग्रीवश्चासौ रामश्च सुग्रीवरामः (ಕರ್ಮಧಾರಯ ಸಮಾಸ).

**सहलक्ष्मणः** (1) ಲಕ್ಷ್ಮಣನೊಡಗೂಡಿದವನು. ಲಕ್ಷ್ಮಣದ್ವಿತೀಯನು (2) ಸಹೋದರ ಶ್ರೀರಾಮನಿಗಾಗಿ ವನವಾಸ ಪರಿಚರಣಾದಿ ಕ್ಲೇಶಗಳನ್ನು ಸಹಿಸಿದ (सहते इति सहः) ಲಕ್ಷ್ಮಣನೆಂಬ ಭ್ರಾತೃವನ್ನು ಪಡೆದವನು. (3) ಪಿತೃವಾಕ್ಯ ಪರಿಪಾಲನೆಗಾಗಿ ಸಹನಶಕ್ತಿಯಿಂದ ಕೂಡಿದ ಶುಭಲಕ್ಷಣಶಾಲಿ. लक्ष्मणेन सह वर्तत इति ; सहः लक्ष्मणः यस्य सः ; सहश्चासौ लक्ष्मणश्च सहलक्ष्मणः ।

**यो रावणार्यप्रतिमः** — (देव्या) ಯಾರು ಸೀತೆಯ ಕಾರಣಕ್ಕಾಗಿ ರಾವಣನಿಗೆ ಅಪ್ರತಿಮ ವೈರಿಯೆನಿಸಿದನೋ, ಅಂದರೆ 'रावणस्य अप्रतिमारिः बभूव' ಎಂದು ಅರ್ಥ. ಇಲ್ಲಿ देव्या ಎಂಬುದು ಹೇತ್ವರ್ಥದಲ್ಲಿ ತೃತೀಯಾ ವಿಭಕ್ತಿಯಲ್ಲಿದೆ. ರಾವಣನು ಸೀತೆಯನ್ನು ಅಪಹರಿಸಿದ. ಈ ಕಾರಣದಿಂದ ಶ್ರೀರಾಮನು ರಾವಣನ ವೈರಿಯಾದ. ಕೇವಲ ವೈರಿಯಾದನೆಂದರೆ ಏನೂ ಅತಿಶಯವಲ್ಲ. ಏಕೆಂದರೆ ರಾವಣನಿಗೆ ದೇವ, ಯಕ್ಷ, ಕಿನ್ನರ, ಗಂಧರ್ವರಲ್ಲೆಲ್ಲಾ ವೈರಿಗಳಿದ್ದರು. ಆದರೆ ಅವರು ಅವನನ್ನು ಕಂಡರೆ ಭಯಬೀಳುತ್ತಿದ್ದರು. ಶ್ರೀರಾಮನು ಅಂತಹ ರಾವಣನನ್ನೂ ಕೊಂದು 'ಅಪ್ರತಿಮ ಅರಿ' ಯೆನಿಸಿದ. ಇಲ್ಲಿ ಕವಿ ನಾಟಕದ ಮುಖ್ಯ ದೃಶ್ಯವನ್ನು ಸೂಚಿಸುವ ಉದ್ದೇಶದಿಂದಲೂ अप्रतिम ಎಂಬ ಪದವನ್ನು ಚಮತ್ಕಾರದಿಂದ ಜೋಡಿಸಿರುವಂತಿದೆ.

रावणस्य अरिः (ಷಷ್ಠೀತತ್ಪುರುಷ) रावणारिः । रावणारिश्चासौ अप्रतिमश्च रावणार्यप्रतिमः (ಕರ್ಮಧಾರಯ),

**विभीषणात्मा** — ವಿಭೀಷಣನನ್ನೇ ತನ್ನ ಆತ್ಮನೆಂದು ಭಾವಿಸಿದವನು ಅಥವಾ ವಿಭೀಷಣನಿಗೆ ಆತ್ಮಸ್ವರೂಪನಾದವನು. ವಿಭೀಷಣನು ಯಾರನ್ನು ತನ್ನ ಪ್ರಾಣ (ಆತ್ಮ) ವೆಂದು ಬಗೆದನೋ ಅವನು. ಕೆಲವರು 'ಶತ್ರುಗಳಿಗೆ ಭಯಾವಹವಾದ ಆತ್ಮನು' ಎಂದೂ ಅರ್ಥಮಾಡಿದ್ದಾರೆ. ಮತ್ತೆ ಕೆಲವರು देव्या विभीषणात्मा ಎಂದಿರುವುದನ್ನು देव्या अविभीषणात्मा ಎಂದು ಪದವಿಭಾಗ ಮಾಡಿ ತನ್ನ ಹೆಸರಿಗೆ ಅನ್ವರ್ಥವಾಗಿ ಎಂದೂ ಭಯಾವಹನಲ್ಲದಿದ್ದರೂ (ಅಂದರೆ ಪ್ರಶಾಂತಾತ್ಮನೇ ಆದರೂ) ಯಾರು ರಾವಣನಂತಹ ವೈರಿಯನ್ನೂ ಕೊಂದು ತಾನು 'ಅಪ್ರತಿಮ ವೈರಿ' ಯೆನಿಸಿದನೋ ಎಂದು ಅರ್ಥಮಾಡಿದ್ದಾರೆ. 'देव्या' ಎನ್ನುವುದು सहार्थे तृतीया ಎಂದು ಭಾವಿಸಿ, 'ಸೀತೆಯೊಡನೆ (ಇದ್ದು) ರಕ್ಷಿಸಲಿ' ಎಂದು ಹೇಳಿದ್ದಾರೆ.

विभीषणः आत्मा यस्य सः विभीषणात्मा (ಬಹುವ್ರೀಹಿ) विभीषणः य आत्मेति मन्यते सः विभीषणात्मा । 'अविभीषणात्मा' ಎಂದು ಪದವಿಭಾಗ ಮಾಡಿದರೆ, न विभीषणः अविभीषणः (ನಞ್ತತ್ಪುರುಷ) अविभीषणः आत्मा यस्य सः (ಬಹುವ್ರೀಹಿ).

**भरतः** — ರಕ್ಷಕ, ಲೋಕರಕ್ಷಕ. भरः भरणम्, भरं तनोतीति भरतः । ಕೆಲವರು विभीषणात्माभरतः ಎಂದು ಒಂದು ಪದವನ್ನಾಗಿ ತೆಗೆದುಕೊಂಡು—'ಆತ್ಮಸಮ ಸುಖದುಃಖನಾದ ವಿಭೀಷಣ ಪಕ್ಷಪಾತಿಯಾದವನು ಎಂದು ಅರ್ಥಮಾಡಿದ್ದಾರೆ. ಮಹಾಮಹೋಪಾಧ್ಯಾಯ ಪಂಡಿತ ಗಣಪತಿಶಾಸ್ತ್ರಿಗಳ ಈ ವ್ಯಾಖ್ಯಾನವನ್ನು ಗಮನಿಸಿ:

विभीषणे तन्नाम्नि रावणभ्रातरि आत्माभे आत्मसमदुःखसुखे आत्मभित्रे रतः अनुरक्तः ।

**अनुसर्गं** — ಜನ್ಮಜನ್ಮದಲ್ಲಿಯೂ सर्गे सर्गे अनुसर्गम् (ಅವ್ಯಯೀಭಾವ).

**पातु** — ರಕ್ಷಿಸಲಿ. पा ಧಾತುವಿನ ಆಜ್ಞಾರ್ಥರೂಪ. ಪ್ರ.ಪು.ಏ.ವ.

**नेपथ्यं** — ತೆರೆಯ ಹಿಂಭಾಗ ; ಕಣ್ಣಿಗೆ (ಪಥ್ಯ) ಸೊಗಸಾಗಿರುವುದು. निनः पथ्यं नेपथ्यं । ನಟನಟಿಯರು ಬಣ್ಣ-ಬಟ್ಟೆಗಳನ್ನು ಹಾಕಿಕೊಳ್ಳುವ ಜಾಗ.

**आर्ये** — 'आर्या' ಶಬ್ದದ ಸಂಬೋಧನ ಪ್ರಥಮೈಕವಚನ. ಸೂತ್ರಧಾರನು ತನ್ನ ಪತ್ನಿಯನ್ನು 'आर्ये' ಎಂದು ಕರೆಯುತ್ತಾನೆ. ಅವಳು ಅವನನ್ನು आर्य ಅಥವಾ 'आर्यपुत्र' ಎಂದು ಕರೆಯುತ್ತಾಳೆ.

**शरत्कालमधिकृत्य....गीयतां तावत्** — ಮಳೆಗಾಲದ ಮೇಲೆ ಬರುವ ಈ ಶರತ್ಕಾಲದಲ್ಲಿ ಪ್ರಕೃತಿ ದೇವತೆ ಪ್ರಸನ್ನಳಾಗಿರುತ್ತಾಳೆ. ನಾಟಕಾದಿಗಳ ಪ್ರದರ್ಶನಕ್ಕೆ ಈ ಕಾಲ ಉಚಿತವಾಗಿರುತ್ತದೆ.

**ಶ್ಲೋಕ 2** (ಆರ್ಯಾ) — नरेन्द्रभवने काशांशुकवासिनी मुदिता त्वरिता प्रतिहाररक्षी इव पुलिनेषु काशांशुकवासिनी सुसंहृष्टा हंसी चरति ।

ರಾಜನ ಅರಮನೆಯಲ್ಲಿ ಕಾಶಕುಸುಮವನ್ನು ಹೋಲುವ ಶುಭ್ರ ಹಾಗೂ ಸೂಕ್ಷ್ಮ ರೇಶ್ಮೆ ವಸ್ತ್ರವನ್ನು ಧರಿಸಿ ಸಂತೋಷದಿಂದಲೂ (ಕೆಲಸಗಳ) ಸಡಗರದಿಂದಲೂ ಓಡಾಡುತ್ತಿರುವ ಈ ದ್ವಾರಪಾಲಿಕೆಯಂತೆ (ಶರತ್ಕಾಲದಲ್ಲಿ) ಕಾಶಕುಸುಮದಂತೆ ಶುಭ್ರ ಕಾಂತಿಯಿಂದ ಕೂಡಿರುವ ಹೆಣ್ಣು ಹಂಸಪಕ್ಷಿಯು ಸಂತೋಷ ಸಡಗರಗಳಿಂದ ಮರಳಿನಲ್ಲಿ ಓಡಾಡುತ್ತಿದೆ. पुलिनेषु : ನದೀತೀರದ ಮರಳಿನಲ್ಲಿ.

**काशांशुकवासिनी** — ಈ ವಿಶೇಷಣ ಹಂಸಿಗೂ ಪ್ರತಿಹಾರಿಗೂ ಅನ್ವಯಿಸುತ್ತದೆ. ಶರತ್ಕಾಲ ಬಂದಿದೆಯೆಂದು ಹಂಸಿಗೆ ಸಂತೋಷ. ಅದರ ಸ್ವಾಭಾವಿಕ ಶುಭ್ರವರ್ಣ ಕಾಶಪುಷ್ಪವನ್ನು ಹೋಲುತ್ತದೆ. ಪ್ರತಿಹಾರಿಯು ಕಾಶಕುಸುಮದಂತೆ ತೆಳ್ಳಗೆ ಬೆಳ್ಳಗೆ ಇರುವ ರೇಶ್ಮೆಯನ್ನುಟ್ಟು ಶ್ರೀರಾಮನ ಅಭಿಷೇಕವಾಗಲಿರುವುದರಿಂದ ಸಡಗರದಿಂದ ಅರಮನೆಯಲ್ಲೆಲ್ಲ ಓಡಾಡುತ್ತಿದ್ದಾಳೆ. ಕಾಶಪುಷ್ಪವು ತುಂಬ ಬೆಳ್ಳಗಿರುತ್ತದೆ. ಶರತ್ಕಾಲವನ್ನು ಕಾಳಿದಾಸ ಋತುಸಂಹಾರದಲ್ಲಿ ಕಾಶಾಂಶುಕಾ ಎಂದೇ ವರ್ಣಿಸಿದ್ದಾನೆ. ಪಂಡಿತ ಗಣಪತಿಶಾಸ್ತ್ರಿಗಳು ಈ ಪದವನ್ನು 'ಕಾಶಾಂಶುಃ' ಮತ್ತು 'ಕವಾಸಿನೀ'

ಎಂದು ವಿಭಾಗಮಾಡಿಕೊಂಡು 'ಕಾಶಾಂಶುಃ' ಎಂದರೆ 'ಕಾಶಪುಷ್ಪಪ್ರಭಾ' ಎಂದೂ 'ಕವಾಸಿನೀ' ಎಂದರೆ (ಕಂ=ಜಲಂ) ಜಲವಾಸಿನೀ ಎಂದೂ 'ಹಂಸೀ'ಗೆ ಚಮತ್ಕಾರವಾಗಿ ವಿಶೇಷಣಮಾಡಿದ್ದಾರೆ. ಸಂಭ್ರಮದಿಂದ ಓಡಿಯಾಡುತ್ತಿರುವ ದ್ವಾರಪಾಲಕಿಯನ್ನು ಬಿಳಿಯ ಮಳಲೊಟ್ಟಿನಲ್ಲಿ ಕಾಶಪುಷ್ಪಗಳ ನಡುವೆ ಓಡಿಯಾಡುವ ಹಂಸಕ್ಕೆ ಹೋಲಿಸಿರು ವುದು ಒಂದು ಸುಂದರವಾದ ಉಪಮೆಗೆ ದೃಷ್ಟಾಂತವಾಗಿದೆ.

काश (कुसुम) तुल्यं अंशुकं वसितुं शीलमस्या इति काशांशुकवासिनी ।

नराणां इन्द्रः नरेन्द्रः तस्य भवने नरेन्द्रभवने ।

**प्रतिहाररक्षी** — ಬಾಗಿಲು ಕಾಯುವವಳು, ದ್ವಾರಪಾಲಕಿ. प्रतिहारि ಅಥವಾ प्रतीहारि ಎನ್ನುವುದೂ ರೂಢಿಯಲ್ಲುಂಟು. ವೃತ್ತದ ಆವಶ್ಯಕತೆಗಾಗಿ 'रक्षी' ಎಂದು ಸೇರಿಸಿದೆ.

प्रतिहारं (द्वारं) रक्षतीति प्रतिहाररक्षी

ಈ ಶ್ಲೋಕವನ್ನು ಸೂತ್ರಧಾರ ಪ್ರಾರಂಭಿಸಿ ಪೂರ್ವಾರ್ಧವನ್ನು ಮುಗಿಸುವಲ್ಲಿ ತೆರೆಯ ಹಿಂದೆ ಯಾರೋ 'ಆರ್ಯ ! ಆರ್ಯ !' ಎಂದು ಕೂಗಿದುದರಿಂದ ಅಷ್ಟಕ್ಕೇ ನಿಲ್ಲಿಸಿ ಧ್ವನಿ ಯಾರದೆಂದು ತಿಳಿದಮೇಲೆ ಶ್ಲೋಕವನ್ನು ಪೂರ್ತಿ ಹೇಳುತ್ತಾನೆ.

**स्थापना** — ಇದು ಪೀಠಿಕಾಭಾಗ. ನಾಟಕದ ವಸ್ತುವನ್ನು ಇಲ್ಲಿ ಸ್ಥಾಪಿಸುವದ ರಿಂದ ಇದಕ್ಕೆ 'ಸ್ಥಾಪನಾ' ಎಂದು ಹೆಸರಾಗಿರಬೇಕು. ಸಾಮಾನ್ಯವಾಗಿ ಬೇರೆ ಕವಿಗಳ ರೂಪಕಗಳಲ್ಲಿ ಇದನ್ನು 'प्रस्तावना' ಎಂದೋ 'आमुखं' ಎಂದೋ ಕರೆದಿದ್ದಾರೆ. ಭಾಸನ 13 ನಾಟಕಗಳಲ್ಲಿ 11 ನಾಟಕಗಳಲ್ಲಿ 'ಸ್ಥಾಪನಾ' ಎಂಬ ಪದವೇ ಉಪಯೋಗಿಸಲ್ಪಟ್ಟಿದೆ. ಬಾಲಚರಿತದಲ್ಲಿ ಇಂತಹ ಪೀಠಿಕೆಗೆ ಯಾವ ಹೆಸರನ್ನೂ ಹೇಳಿಲ್ಲ. 'ಕರ್ಣಭಾರ'ದಲ್ಲಿ ಪೀಠಿಕಾಭಾಗವೇ ಇಲ್ಲ. ಈ ಪೀಠಿಕೆ ಅಥವಾ ಸ್ಥಾಪನೆ ಯಲ್ಲಿ ಕರ್ತೃ, ಕೃತಿ, ಆಶ್ರಯದಾತನ ವಿಷಯವಾಗಿ ಏನನ್ನೂ ಹೇಳದೆ ಮಿತವಾದ ಸಂಭಾಷಣೆಯನಂತರ ಮುಂದೆ ಬರುವ ಪಾತ್ರವನ್ನು ಪರಿಚಯಮಾಡಿ ಕೊಡಲ್ಪಟ್ಟಿದೆ. ಹೀಗೆ ಮುಂದಿನ ಪಾತ್ರಪರಿಚಯ ಮಾಡಿಕೊಡುವ ಲಕ್ಷಣದಿಂದ ಕೂಡಿದ್ದರೆ ಅದಕ್ಕೆ प्रयोगातिशय ವೆಂದು ಹೆಸರಾಗುತ್ತದೆ.

ಪುಟ 2

**काञ्चुकी** ಅಥವಾ **काञ्चुकीयः** — ಇವನು ಅಂತಃಪುರದ ಒಬ್ಬ ಸೇವಕ. ಇವನು ಬ್ರಾಹ್ಮಣನೂ ವೃದ್ಧನೂ ಸುಶೀಲನೂ ಕಾರ್ಯದಕ್ಷನೂ ಆಗಿರುತ್ತಾನೆ. 'ಕಂಚುಕ' ವೆಂಬ ನಿಲುವಂಗಿಯನು ಧರಿಸುವುದು ಇವನ ಉಡುಪಿನ ವಿಶಿಷ್ಟ ಲಕ್ಷಣ

**आर्य महाराजो....संभारा आनीयन्तामिति** — ಈ ನಾಟಕವು ಪ್ರಾರಂ ಭವಾಗುವಾಗ ಶ್ರೀರಾಮಪಟ್ಟಾಭಿಷೇಕಕ್ಕೆ ಏರ್ಪಾಡು ನಡೆಯುತ್ತಿದೆ. ಈ ಮಹೋತ್ಸವ

ಅಂಶವನ್ನು ಕವಿಯು ವರ್ಣಿಸಿ ಅಲ್ಲಿಯ ಸಂಭ್ರಮವನ್ನೂ ಜನಗಳ ಸಂತೋಷವನ್ನೂ ಸೂಚಿಸುವನು. ಈ ವಾಕ್ಯದಲ್ಲಿ ಬಂದಿರುವ ಅಂತ್ಯಪ್ರಾಸದ ಸುಂದರ ಶಬ್ದಾಲಂಕಾರ ವನ್ನು ಗಮನಿಸಿ—

**राज्यप्रभावसंयोगकारका:** — ರಾಜ್ಯಪ್ರಭುತ್ವಕ್ಕೆ ಅಭಿಷಿಕ್ತನನ್ನಾಗಿ ಮಾಡಲು ಬೇಕಾದ.

**महारथः** — ಶಸ್ತ್ರಶಾಸ್ತ್ರಪ್ರವೀಣನು ಒಬ್ಬನೇ ದಶಸಹಸ್ರ ಧನುರ್ಧಾರಿಗಳನ್ನು ಯುದ್ಧದಲ್ಲಿ ಎದುರಿಸುವ ಮಹಾಪರಾಕ್ರಮ ಪಡೆದವನು (एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च स महारथ उच्यते ) ।

**संभाराः** — ಛತ್ರಚಾಮರಾದಿ ಉಪಕರಣಗಳು. भर्तुदारकस्य = ರಾಜಕುಮಾರನ.

महांश्चासो राजा च महाराजः (ಕರ್ಮಧಾರಯ).

भर्तृः (राज्ञः) दारकः (सुतः) भर्तृदारकः (तस्य) (ಷಷ್ಠೀತತ್ಪುರುಷ).

**ಶ್ಲೋಕ 3** (ಶಾರ್ದೂಲವಿಕ್ರೀಡಿತ) — सव्यजनं छत्रं (कल्पितम्); सनन्दिपटहं भद्रासनं कल्पितम्; सदर्भकुसुमास्तीर्थाम्बुपूर्णाः हेममयाः घटाः न्यस्ताः; पुष्यरथश्च युक्तः, मन्त्रिसहिताः पौराः समभ्यागताः; अस्य सर्वस्य मङ्गलं सः भगवान् वसिष्ठः हि वेद्यां स्थितः ।

ಛತ್ರ–ಚಾಮರಗಳೂ, ಮಂಗಳಪೀಠವೂ (ಸಿಂಹಾಸನ), ಮಂಗಳವಾದ್ಯಗಳೂ ಸಿದ್ಧವಾಗಿವೆ. ಸ್ವರ್ಣಕಳಶಗಳಲ್ಲಿ ಪವಿತ್ರತೀರ್ಥಗಳ ನದೀಸಮುದ್ರಗಳ ಜಲವನ್ನು ತಂದು ಇಡಲಾಗಿದೆ. ಮಂಗಳರಥವೂ ಸಜ್ಜಾಗಿದೆ. ಮಂತ್ರಿಗಳೊಂದಿಗೆ ಪ್ರಜೆಗಳು ಆಗಮಿಸಿದ್ದಾರೆ. ಈ ಎಲ್ಲ ಮಂಗಳಕ್ಕೂ ಮಂಗಳಕರರಾದ ಪೂಜ್ಯ ವಸಿಷ್ಠಮಹರ್ಷಿ ಗಳೂ ಆಗಮಿಸಿ ವೇದಿಕೆಯಲ್ಲಿ ಸಿದ್ಧರಾಗಿ ನಿಂತಿದ್ದಾರೆ.

**नन्दिपटहं** — ಸಂತೋಷ–ಸಮಾರಂಭಗಳಲ್ಲಿ ನುಡಿಸುವ ವಾದ್ಯವಿಶೇಷ.

**व्यजनं** — ಚಾಮರ. **छत्रं** — ಶ್ವೇತಚ್ಛತ್ರ. ಇವು ರಾಜರಿಗೂ ದೇವತೆ ಗಳಿಗೂ ಆವಶ್ಯಕ ಗೌರವೋಪಕರಣಗಳು.

**पुष्यरथः** — ಉತ್ಸವ-ಸಂದರ್ಭಗಳಲ್ಲಿ ಉಪಯೋಗಿಸುವ ವಿಶೇಷ ರಥ. ಇದನ್ನು ಯುದ್ಧದಲ್ಲಿ ಉಪಯೋಗಿಸುವುದಿಲ್ಲ. ಪುಷ್ಯ ಒಂದು ನಕ್ಷತ್ರ. ಅದು ಮಂಗಳ ಹಾಗೂ ಸುಖಕರ. ಅದರಂತೆ ಸುಖಕರವೂ ಮಂಗಳವೂ ಆದ ಸುಂದರ ರಥ. (असौ पुष्यरथश्चक्रयाने न समराय यत्). ಕೊನೆಯ ಪಾದದಲ್ಲಿರುವ हि ಎಂಬುದಕ್ಕೆ 'ಇವೆಲ್ಲಕ್ಕೂ ಮಿಗಿಲಾದ' ಎಂದು ಅರ್ಥಮಾಡಬಹುದು.

**ಶ್ಲೋಕ 4** (ಅನುಷ್ಟುಪ್) — इदानीं रामा...नं शशाङ्कं मेदिन्
अभिषिञ्चता भूमिपालेन प्रजाः कृतकृत्याः कृताः।

ಶ್ರೀರಾಮನೆಂಬ ಚಂದ್ರನನ್ನು ಭೂಮಿಯ ರಾಜ್ಯದಲ್ಲಿ ಅಭಿಷೇಕ ಮಾಡುತ್ತ
ರುವ ದಶರಥ ಮಹಾರಾಜನಿಂದ ಪ್ರಜೆಗಳು ಧನ್ಯರಾಗಿ ಮಾಡಲ್ಪಟ್ಟಿದ್ದಾರೆ.

रामः इति अभिधानं यस्य तं रामाभिधानम्।

**शशाङ्क** — ಶಶ ಎಂದರೆ ಮೊಲ. ಅದನ್ನು अङ्क ಎಂದರ ಚಿಹ್ನೆಯಾಗಿ ಉಳ
ವನು—शशी ಎಂದೂ ಕರೆಯುವುದುಂಟು. शशः अङ्कं यस्य सः (ಬಹುವ್ರೀಹಿ).

ನಾಟಕದ ವಸ್ತುವಿನ ಬೆಳವಣಿಗೆಯಲ್ಲಿ ಆರಂಭ, ಯತ್ನ, ಪ್ರಾಪ್ತ್ಯಾಶ
ನಿಯತಾಪ್ತಿ ಮತ್ತು ಫಲಾಗಮ ಎಂಬ ಐದು ಅವಸ್ಥೆಗಳನ್ನು ಲಾಕ್ಷಣಿಕರು ಗುರುತಿಸ
ತ್ತಾರೆ. ಪ್ರಸಕ್ತ ನಾಟಕದಲ್ಲಿ ಈ ರಾಮಾಭಿಷೇಚನ ಸಿದ್ಧತೆ 'ಆರಂಭಾವಸ್ಥೆ' ಎನಿ
ಕೊಳ್ಳುತ್ತದೆ.

**सम्भवक** — ಇವನು ಇನ್ನೊಬ್ಬ ಕಂಚುಕಿ. सङ्गीतशाला — ನಾಟ್ಯಶಾಲ
**नाटकीयानां** — ನಟರಿಗೆ. कालसंवादिना — ರಾಜ್ಯಾಭಿಷೇಕ ಕಾಲಕ್ಕೆ ಉಚಿತವಾ

ಪುಟ 3

(ಇಲ್ಲಿಂದ ವಲ್ಕಲ ಪ್ರಸಂಗ ಪ್ರಾರಂಭವಾಗುತ್ತದೆ)

ನಾಟಕದಲ್ಲಿ ಉಪಯೋಗಿಸಿ ಉಳಿದಿದ್ದ ಅಶೋಕದ ಚಿಗುರೊಂದನ್ನು (ಇದನ್
ಕಿವಿಯಲ್ಲಿ ಅಲಂಕರಿಸಿಕೊಳ್ಳುವ ರೂಢಿ ಇತ್ತು) ತನಗೆ ಬೇಕೆಂದು ಅವದಾತಿಕೆ ನೇಪಥ್ಯ
ಪಾಲಿಕೆ ರೇವೆಯನ್ನು ಕೇಳುತ್ತಾಳೆ. ಆದರೆ ಅವಳು ಕೊಡದೆ ನಿರಾಕರಿಸಿದ್ದರಿಂ
ಅಲ್ಲಿಂದ ಒಂದು ವಲ್ಕಲ (ನಾರುಮಡಿ) ಯನ್ನು ಕೀಟಲೆಗೋಸ್ಕರ ಅವದಾತಿಕೆ ಮುಚ್ಚಿ
ತರುತ್ತಾಳೆ. ಎಂದೂ ಅಕಾರ್ಯ ಮಾಡದ ಅವಳಿಗೆ ರೇವೆಯ ಕಣ್ಣು ತಪ್ಪಿಸಿ ಆ ರೀ
ಹಾಸ್ಯಕ್ಕಾಗಿ ತಂದದ್ದೂ ಪಾಪಕಾರ್ಯವೆನಿಸಿ ಭಯದಿಂದ 'ಅಹೋ ! ಅತ್ಯಾಹಿತಮ್
(ಅಯ್ಯೋ, ಎಂತಹ ಅನರ್ಥ! ಎಂತಹ ತಪ್ಪು!) ಎಂದು ಹೇಳಿಕೊಳ್ಳುತ್ತಾಳ
ಅವದಾತಿಕೆಯ ಈ ಮಾತು ಅರ್ಥಗರ್ಭಿತವಾಗಿದ್ದು ಮುಂದಿನ ಘಟನೆಗಳನ್ನು ಧ್ವನಿ
ಗೊಳಿಸುತ್ತದೆ. ಈ ಪ್ರಸಂಗ ಮುಂದುವರೆದಂತೆಲ್ಲ ಸೀತೆಯ ಸರಳ ಸ್ವಭಾವ, ಘನತ
ಹಾಸ್ಯಪ್ರವೃತ್ತಿ, ಉದಾತ್ತ ಪ್ರವೃತ್ತಿ ಅಲೆ ಅಲೆಯಾಗಿ ಪ್ರಕಾಶಗೊಳ್ಳುತ್ತದ
ಈ ಪ್ರಸಂಗದಲ್ಲಿ ದುರಂತದ ಒಂದು ವ್ಯಂಗ್ಯ ಪ್ರವಾಹ ಗುಪ್ತಗಾಮಿಯಾಗಿದೆ. ಇದನ
ತಂದಿರುವ ಕವಿಯ ಕಲಾ ಪ್ರೌಢಿಮೆ ಅಪೂರ್ವ.

**परिहासेनापि····परधनं हरतः** — ಕೇವಲ ತಮಾಷೆಗಾಗಿ ಈ ವಲ್ಕಲವನ
ಮುಚ್ಚಿ ತಂದ ನನಗೇ ಇಷ್ಟೊಂದು ಭಯ. ಅಬ್ಬ! ಲೋಭದಿಂದ ನಮ್ಮದಲ್ಲ

(ಬೇರೆಯವರ) ವಸ್ತುವನ್ನು ಅಪಹರಿಸಿದರ ಇನ್ನೇನು ಗತಿ! ಈ ವಾಕ್ಯದಿಂದ ಮುಂದೆ ಬರುವ ' ರಾಜ್ಯಾಪಹಾರ ' ದ ಪ್ರಸಂಗ ಸೂಚಿತವಾಗಿದೆ.

**हञ्जे**—ಚೇಟಿಯನ್ನು ಹೀಗೆ ಸಂಬೋಧಿಸುವುದು ರೂಢಿ.

(हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति)

**परिशङ्कितवर्णा** — ಸಂಶಯಾಸ್ಪದವಾದ ಆಕಾರವುಳ್ಳವಳು. ಅವದಾತಿಕೆಯನ್ನು ಕಂಡಕೂಡಲೇ ಸೀತೆಗೆ ಅವಳೇನೋ ಅಕಾರ್ಯ ಮಾಡಿರಬೇಕೆಂದು ಅನಿಸುತ್ತದೆ.

**सुलभापराधः परिजनो नाम**—ಪರಿಜನರು ತಪ್ಪು ಮಾಡುವುದು ಸಾಧಾರಣವೇ ತಾನೇ (ಗಣಪತಿಶಾಸ್ತ್ರಿಗಳು : बह्वसम्भवापराधः ಬೇಕಾದಷ್ಟು ತಪ್ಪು ಮಾಡುತ್ತಾರೆ ಎಂದೂ, ಕಾಳೆಯವರು स्वल्पेऽपि कारणे अपराधी स्थाप्यते। 'ಪರಿಜನರು ಸ್ವಲ್ಪ ತಪ್ಪು ಮಾಡಿದರೂ ಅದು ಹಗರಣವೇ ಆಗಿ ಅಪರಾಧಿಯಾಗಿಬಿಡುತ್ತಾರಷ್ಟೇ ' ಎಂದೂ ಅರ್ಥಮಾಡುತ್ತಾರೆ).

**भट्टिनी** — भट्टः राजा सोऽस्या अस्ति पतित्वेन इति भट्टिनी ರಾಣಿ. ಈಗ ಪರಿಹಾಸಕ್ಕಾಗಿ ಇದನ್ನು ಕದ್ದಿರುವೆ. ಮುಂದೆ ಲೋಭದಿಂದಲೇ ಇನ್ನೂ ಏನನ್ನೋ ಕದಿಯುವ ರೂಢಿಯೂ ಆಗುತ್ತದೆ.

ಪುಟ 4

**सर्वशोभनीयं सुरूपं नाम** — ಸ್ವಭಾವಸುಭಗವಾದ ರೂಪವು ಸರ್ವಪ್ರಕಾರದಿಂದಲೂ ಅಂದವಾಗಿಯೇ ಕಾಣುತ್ತದೆ. ಅಂದರೆ ನೈಸರ್ಗಿಕ ಸುಂದರ ರೂಪವಿದ್ದರೆ ಏನನ್ನೇ ಉಡಲಿ, ಯಾವುದನ್ನೇ ತೊಡಲಿ, ಸರ್ವಥಾ ಅದು ಕಾಂತಿಯುತವಾಗಿಯೇ ಇರುತ್ತದೆ. ಇದೇ ಅಭಿಪ್ರಾಯವನ್ನು ಕಾಲಿದಾಸನು ಶಕುಂತಲೆಯ ರೂಪವರ್ಣನೆಯಲ್ಲಿ 'ಅವಳು ನಾರುಡೆಯಿಂದ ಕೂಡಿದ್ದರೂ ಅನುಪಮ ಲಾವಣ್ಯವತಿಯಾಗಿದ್ದಳು' ಎಂದು ಹೇಳಿ ' किमिव हि मधुराणां मण्डनं नाकृतीनाम् ' ಎಂದು ಮನೋಜ್ಞವಾಗಿ ಸಮರ್ಥಿಸಿದ್ದಾನೆ (ಶಾಕುಂತಲ ಅಂಕ 1, ಶ್ಲೋ 20).

**सुवर्णस्य विकारः सौवर्णिकम्।**

**आदर्शः** —ಕನ್ನಡಿ. ಚೇಟಿಯು ಕನ್ನಡಿ ತರಲು ಹೋಗುವಂತೆ ಕಲ್ಪಿಸಿರುವುದು ಅವಳು 'ಅಭಿಷೇಕದ ಸಮಾಚಾರ'ವನ್ನು ತರಲು ಸಹಾಯಕವಾಗಿದೆ. ಇದು ಮುಂದಿನ ಕಥಾಭಾಗದ ಬೆಳವಣಿಗೆಗೆ ಮಾರ್ಗ ಮಾಡಿಕೊಡುತ್ತದೆ.

**प्रहर्षितानि तनूरुहाणि मन्त्रयन्ते** — ಈ ರೋಮಾಂಚವೇ ಹೇಳುತ್ತದೆ. ರೋಮಾಂಚಕ್ಕೆ ಕಾರಣ ಅತಿಶಯ ಆಶ್ಚರ್ಯ ಮತ್ತು ಸಂತೋಷ. ಅ[illegible] ಕಾರಣ—ವಲ್ಕಲವನ್ನೂ ಸೌವರ್ಣಿಕವಾಗಿ ಮಾಡಿದ ಸೀತೆಯ ರೂಪಾತಿಶಯ.

**प्रियाख्यानिकम्** — ಇನ್ನೊಬ್ಬ ಚೇಟಿ ಬಂದು ಹೇಳುವ ಮಾತಿದು. "ಪ್ರಿಯ ವಾದ ಸಮಾಚಾರ".

ಪುಟ 5

**अपि तातः कुशली** — 'ಮಾವನವರು ಕ್ಷೇಮ ತಾನೇ ?' ಶ್ರೀರಾಮಪಟ್ಟಾಭಿ ಷೇಕದ ಸುದ್ದಿ ಬಂದರೂ ಸೀತೆ ಆ ಸೌಭಾಗ್ಯದಲ್ಲಿ ಅನಾಸಕ್ತೆ. ರಾಮನಿಗೆ ಪಟ್ಟಾಭಿ ಷೇಕವಾಗಬೇಕಾದರೆ ದಶರಥನ ಯೋಗಕ್ಷೇಮವೇನೋ ಎಂತೋ ಎಂಬ ಕಳವಳ ಅವಳಿಗೆ. ಹೀಗೆ ಸೀತೆಯ ಘನತೆಯನ್ನು ಕವಿ ಇಲ್ಲಿಂದ ಅಲೆ ಅಲೆಯಾಗಿ ವಿಸ್ತರಿಸಿ ಬಣ್ಣಿಸುತ್ತಾನೆ.

**विशालतरमुत्सङ्गं कुरु** — (ಪಾರಿತೋಷಕವನ್ನು ಪಡೆಯಲು) ನಿನ್ನ ಸೀರೆಯ ಮಡಿಲನ್ನು ಚಾಚು. ತನ್ನ ಮಾವನವರ ಆರೋಗ್ಯ ವಿಚಾರವನ್ನೂ ತನ್ನ ಪತಿಯ ಅಭಿಷೇಕ ಸಮಾಚಾ[illegible] ತಂದ ಆ ಚೇಟಿಗೆ ನಿಂತ ನಿಲುವಿನಲ್ಲಿಯೇ—ಪ್ರಿಯವಾರ್ತೆಗೆ ಅರ್ಹವೆಂದು—ತಾನು ಹಾಕಿಕೊಂಡಿದ್ದ ಆಭರಣಗಳನ್ನು ಬಿಚ್ಚಿ, ತನ್ನ ಔದಾರ್ಯಕ್ಕೆ ಸಹಜವಾಗಿ ಪಾರಿತೋಷಕ ಕೊಡುವಳು. ಮೊದಲೇ ಪಟ್ಟೆಪೀತಾಂಬರಕ್ಕೆ ಬದಲಾಗಿ ನಾರುಡೆಯನ್ನು ಉಡಿಸಿ ಆಭರಣಗಳನ್ನು ಈ ನೆಪದಲ್ಲಿ ಅವಳ ಮೈಮೇಲಿಂದ ತೆಗೆಸಿ ಅವಳನ್ನು ವನವಾಸಕ್ಕೆ ಕಳಿಸಲು ಸಿದ್ಧಗೊಳಿಸುತ್ತಲಿರುವ ವಿಧಿಯು 'द्वितीयं मे प्रियं श्रुतम्' ಎಂದು ಅವಳಾಡಲು ತನ್ನಲ್ಲಿಯೇ ನಗುತ್ತಿರಬೇಕು.

**एकपदे अवघट्टिततूष्णीकः पटहशब्दः** — ಇದ್ದಕ್ಕಿದ್ದಂತೆಯೇ ತಾಡನೆಯಾಯಿತು ತತ್‌ಕ್ಷಣದಲ್ಲೇ ಸುಮ್ಮನೆಯೂ ಆಯಿತು.

अवघट्टितश्चासौ तूष्णीकः (मौनी) च

**उद्घातः** — (ಮೂಲಾರ್ಥ—ಏಟು) ಪೆಟ್ಟು. ಅಡ್ಡಿ, ಅಡಚಣೆ.

**बहुवृत्तान्तानि राजकुलानि नाम** — ಅರಮನೆಗಳು (ಪರಸ್ಪರ ವಿರುದ್ಧ) ಸಮಾಚಾರಗಳ ನೆಲಮನೆಯಷ್ಟೆ : ಅಂದರೆ ರಾಜಭವನದಲ್ಲಿ ಈಗೊಂದು ಸಮಾಚಾರ ವಾದರೆ ಇನ್ನು ಸ್ವಲ್ಪ ಹೊತ್ತಿನಲ್ಲೇ ಇದಕ್ಕೆ ವಿರುದ್ಧವಾದ ಇನ್ನೊಂದು ಸಮಾಚಾರ ವಾಗಬಹುದು ಎಂಬರ್ಥ. बहु(प्रकारा) वृत्तान्ताः (व्यतिकराः) येषु तानि (तथाभूतानि) ಈ ಮಾತು ಆಗಾಮಿ ಅನರ್ಥದ ಸೂಚನೆಯಾಗಿದೆ. ವಿಷಯವನ್ನು ಕೂಡಲೇ ತಿಳಿಸದೆ ಅದನ್ನು ಕುತೂಹಲದಲ್ಲಿ ಹುದುಗಿಸಿಟ್ಟು ಸೀತೆಯ ಬಾಯಲ್ಲಿ ಈ ಮಾತನ್ನು ಆಡಿಸಿ ನಾಟಕದ ಬೆಳವಣಿಗೆಯಲ್ಲಿ ಕವಿಯು ಕೌಶಲವನ್ನು ಮೆರೆಸಿದ್ದಾನೆ

**यद्येवं न तदाभिषेकोदकं** . . — ಹಾಗಾದರೆ ಅದು ರಾಮನಿಗೆ ಅಭಿಷೇಕೋದಕ ವಲ್ಲ. ಕಣ್ಣೀರನ್ನು ತೊಳೆಯಲು ಮುಖೋದಕ ಮಾತ್ರ. ಅಂದರೆ ದಶರಥನು ವನಕ್ಕೆ ತೆರಳುವುದಾದರೆ ಅದರಿಂದ ತನಗೂ ಮತ್ತು ತನ್ನ ಪತಿಗೂ ದುಃ[illegible]

ಉಮ್ಮಳಿಸಿ ಉಮ್ಮಳಿಸಿ ಕಣ್ಣೀರಿನಿಂದ ಮುಖ ಕಳಂಕಗೊಳ್ಳುತ್ತದೆ. ಈ ಅಭಿಷೇಕೋದಕ ಹರ್ಷಕಾರಣವಾಗುವ ಬದಲು ತಂದೆಯನ್ನು ವನಕ್ಕೆ ಕಳುಹಿಸುವ ದುಃಖದ ಕಣ್ಣೀರನ್ನು ತೊಳೆಯುವ ಉದಕವಾಗುತ್ತದೆ ಎಂಬ ಅರ್ಥ. ತನ್ನ ಪತಿ ಅಭಿಷಿಕ್ತನಾಗುತ್ತಾನೆ ಎಂಬ ಹರ್ಷದ ಪ್ರಮಾಣಕ್ಕಿಂತಲೂ ತನ್ನ ಮಾವನವರು ವಾನಪ್ರಸ್ಥಾಶ್ರಮಕ್ಕೆ ತೆರಳುವರಲ್ಲ ಎಂಬ ಆತಂಕದ ಪ್ರಮಾಣವೇ ಅವಳಲ್ಲಿ ಮಿಗಿಲಾಗಿದ್ದಿತೆಂಬುದು ಸ್ಪಷ್ಟವಾಗಿ, ಅವಳು ದಶರಥನಲ್ಲಿಟ್ಟಿದ್ದ ಪ್ರೀತಿ, ವಿಶ್ವಾಸ, ಗೌರವಗಳು ಈ ಮಾತುಗಳಲ್ಲಿ ಪ್ರತಿಬಿಂಬಿತವಾಗುತ್ತವೆ.

**ಶ್ಲೋಕ 5 (ಶಾರ್ದೂಲವಿಕ್ರೀಡಿತ)** — पटहे आरब्धे (सति) गुरुजने स्थिते (सति) (मया) भद्रासने लङ्घिते (सति) घटे स्कन्धोच्चारणनम्यमानवदनप्रच्योतिततोये (सति) राज्ञा आहूय मयि विसर्जिते (सति) जनः मे धैर्येण विस्मितः (अभूत्) यदि स्वः पुत्रः पितुः वचः कुरुते (तर्हि) भो तत्र कः विस्मयः? (इति न जाने)।

ಮಂಗಳ ವಾದ್ಯಗಳು ಮೊಳಗಲು ಪ್ರಾರಂಭವಾಗುತ್ತಿರಲು ವಸಿಷ್ಠ ವಾಮದೇವಾದಿ ಗುರುಹಿರಿಯರು ತಮ್ಮ ತಮ್ಮ ಸ್ಥಾನಗಳಲ್ಲಿ ಸಿದ್ಧರಾಗಿರುತ್ತಿರಲು, ನಾನು ಸಿಂಹಾಸನವನ್ನೇರುತ್ತಿರಲು, ಭುಜದವರೆಗೂ ಮೇಲಕ್ಕೆತ್ತಿ ಹಿಡಿದಿದ್ದ ಮಂಗಳಕಳಶಗಳಿಂದ ಅಭಿಷೇಕಜಲ ಇನ್ನೇನು ಬಿದ್ದು ಹಿನ್ನುತ್ತಿರಲು ಮಹಾರಾಜನು ನನ್ನನ್ನು ಕರೆದು (ಅಭಿಷೇಕ ಬೇಡ) 'ನೀನು ಈಗ ಹೋಗು' ಎಂದು ಹೇಳಿದರು. ನಾನು ಅದರಂತೆ ಮಾಡಿದೆ. ನನ್ನ ಚಿತ್ತಸ್ಥೈರ್ಯವನ್ನು ಕಂಡು ಜನ ಬೆರಗಾದರು. ಮಗನಾದವನು ತನ್ನ ತಂದೆಯ ಮಾತನ್ನು ನಡೆಸಿದರೆ ಅದರಲ್ಲಿ ಆಶ್ಚರ್ಯವೇನೋ ನನಗಂತೂ ತಿಳಿಯದು.

**स्कन्धोच्चारण** . . . . — स्कन्ध—ಹೆಗಲು (ಭುಜ) उत् + चारण ಮೇಲಕ್ಕೆ ಎತ್ತಿದ. ಭುಜದ ಎತ್ತರಕ್ಕೆ ಮಂಗಳಜಲ ತುಂಬಿದ ಕಲಶಗಳನ್ನು ಎತ್ತಿದ್ದಾಗ.

ಈ ಶ್ಲೋಕದಲ್ಲಿ ಉದ್ದಕ್ಕೂ ಸತಿಸಪ್ತಮೀ ಪ್ರಯೋಗ ಬಂದಿದೆ. स्वः पुत्रः ಎಂಬುದನ್ನು पुत्रः स्वस्य पितुः ಎಂದು ಅರ್ಥಮಾಡಿಕೊಂಡರೆ ಚೆನ್ನ. (स्कन्धोच्चारणं—स्कन्धस्योपरि घटस्य उन्नयनं तस्मादनन्तरं नम्यमानं यद् घटस्य वदनं तस्मात् तोयं यस्य एतादृशे घटे संपन्ने सति पतनोन्मुखं न तु पतितं—ಪರಂಜಪೆ.

**स्कन्धोच्चारणेन** शिरसि आवर्जनसौकर्याय स्कन्धात् ऊर्ध्वं नीत्वा इत्यर्थः, नम्यमानात् वदनात् प्रच्योतितुं शीलं (स्वभावं) अस्येति तथाभूतं तोयं यस्य तस्मिन् (घटे) —ಗಣಪತಿಶಾಸ್ತ್ರಿ.

**विरम्यतां इदानीं पुत्र** -- 'ಮಗು, ರಾಮ, ಈಗ ಅಭಿಷೇಕವಾಗುವುದು ಬೇಡ.

ಪುಟ 6

**प्रकृतिजन** — ಪ್ರಜೆಗಳು. एकप्रकारसंक्षिप्तं कृत्वा — ಒಂದುಗೂಡುವಂ ಮಾಡಿ (ಏಕಛತ್ರದ ಅಡಿಗೆ ತಂದು) मातृगोत्रम् — ಕೌಸಲ್ಯೆಯ ವಂಶ : ಪ್ರಾಯಶ ಕೌಸಲ್ಯಾಪುತ್ರ' ಎಂದು ಕರೆದಿರಬೇಕು. 'ज्येष्ठायामसि मे पत्न्यां सदृश्यां सदृश सुतः। उत्पन्नस्त्वं गुणज्येष्ठो मम रामात्मजः प्रियः। (ರಾಮಾಯಣ ಅಯೋಧ್ಯಾ ಸರ್ಗ 3, ಶ್ಲೋ 40).

**अल्पं तुल्यशीलानि द्वन्द्वानि सृज्यन्ते** — ಬ್ರಹ್ಮನು ಸಮಾನ ಸ್ವಭಾವ (ನಮ್ಮಂತಹ) ದಂಪತಿಗಳನ್ನು ಪರಿಮಿತವಾಗಿ ಸೃಷ್ಟಿಸುತ್ತಾನೆ. अल्पं ಎನ್ನುವುದನ್ನು ಅಪರೂಪವಾಗಿ ಎಂದರ್ಥಮಾಡಿಕೊಂಡರೆ ಚೆನ್ನ. ಆಶೆಯೊಬ್ಬರಿಗೆ ಸಂಗರಾಹಿತ್ಯ (ಉದಾಸೀನತೆ) ಇನ್ನೊಬ್ಬರಿಗೆ ಇದ್ದಿದ್ದರೆ ಆ ಭಿನ್ನಸ್ವಭಾವದಿಂದ ದಾಂಪತ್ಯವೇ ಹಾಳಾಗು ತ್ತಿತ್ತು. ಸೀತೆಯಾಗಲೀ ರಾಮನಾಗಲೀ ಯಾರೂ ಆಶಾಲುಬ್ಧರಲ್ಲ. ಇದೇ ಭಾವ ವನ್ನೇ ದುಷ್ಯಂತ ಶಕುಂತಲೆಯರಿಗೆ ಅನ್ವಯಿಸಿ 'समानयन् तुल्यगुणं वधूवरं चिरस्य वाच्यः न गतः प्रजापतिः'—ಎಂದು ಕಾಳಿದಾಸ ಹೇಳಿದ್ದಾನೆ.

**ಶ್ಲೋಕ 8** (ಅನುಷ್ಟುಪ್) — मम (शिरसः) उपरि पतता तस्य (मम पितुः) बाष्पेण मम शिरः क्लेदितम्, अधः (पितुः पादयोः) पतता मम बाष्पेण मे पितुः पादौ च समं क्लेदितौ।

ಶ್ರೀರಾಮನು ದಶರಥನ ಪಾದಕ್ಕೆ ಪ್ರಣಾಮ ಸಲ್ಲಿಸುತ್ತಲಿರಲಿಕ್ಕಾಗಿ ವಾತ್ಸಲ್ಯ ತುಂಬಿದ ದಶರಥನ ಅಶ್ರುಜಲಧಾರೆ ಶ್ರೀರಾಮನ ತಲೆಯ ಮೇಲೂ, ಕೃತಜ್ಞತೆ ತುಂಬಿದ ಶ್ರೀರಾಮನ ಬಾಷ್ಪಧಾರೆ ದಶರಥನ ಪಾದಗಳ ಮೇಲೂ ಬಿದ್ದು ಏಕಕಾಲದಲ್ಲಿ ಅವನ ತಲೆಯೂ ಇವನ ಪಾದಗಳೂ (ಪರಸ್ಪರ ಬಾಷ್ಪಧಾರೆಯ ಪರಿಣಾಮವಾಗಿ) ತೊಯ್ದು ಒದ್ದೆಯಾದವು.

**क्लेदितम्** — ಈ ಶ್ಲೋಕದಲ್ಲಿ 'प्रक्रमभङ्ग' ದೋಷವಿದೆ. क्लेदितं मे शिरः पादौ क्लेदितौ च पितुर्मम ಎಂದಿದ್ದರೆ ಚೆನ್ನಾಗಿತ್ತು.

**आसन्नजराशीर्णैः... शापितः** — ವೃದ್ಧಾಪ್ಯದಿಂದ ಶಿಥಿಲವಾಗಿರುವ ತನ್ನ ಪ್ರಾಣದ ಮೇಲೆ ಆಣೆಯಿಟ್ಟನು. ಅಂದರೆ—'ನಾನು ಜೀವಿಸಿರಬೇಕೆಂಬ ಆಸೆ ನಿನಗಿದ್ದರೆ ನನ್ನ ಮಾತಿನಂತೆ ನೀನು ಅಭಿಷಿಕ್ತನಾಗು' ಎಂದು ದಶರಥ ನುಡಿದನು ಎಂಬ ಭಾವ.

'ಪ್ರಾಣ' ಮತ್ತು ಅದೇ ಅರ್ಥವನ್ನು ಕೊಡುವ ಎಲ್ಲ ಪದಗಳೂ ಸಂಸ್ಕೃತದಲ್ಲಿ ಬಹುವಚನದಲ್ಲೇ ಪ್ರಯೋಗಿಸಲ್ಪಡುತ್ತವೆ.

ಪುಟ 7

**ಶ್ಲೋಕ 7** (ವಸಂತತಿಲಕಾ) — शत्रुघ्नलक्ष्मणगृहीतघटे अभिषेके (वर्तमाने सति) रुदता नृपतिना स्वयं छत्रे गृहीते (सति) (तत्रागतया) संभ्रान्तया मन्थरया राज्ञः कर्णे शनैः किमपि अभिहितं च (अहं) राजा न अस्मि ष।

ಶತ್ರುಘ್ನ ಒಂದು ಕಡೆ, ಲಕ್ಷ್ಮಣ ಇನ್ನೊಂದು ಕಡೆ ಅಭಿಷೇಕದ ಕಳಶವನ್ನು ಹಿಡಿದು ನಿಂತಿರಲಾಗಿ ಆನಂದಬಾಷ್ಪವನ್ನು ಸುರಿಸುತ್ತಾ ಇದ್ದ ರಾಜ ದಶರಥನೇ ಶ್ವೇತಛತ್ರವನ್ನು ಹಿಡಿದಿರಲಾಗಿ, ಅಲ್ಲಿಗೆ ಬಂದ ಮಂಥರೆ ಗಾಬರಿಯಿಂದ ರಾಜನ ಕಿವಿಯಲ್ಲಿ ಮೆಲ್ಲಗೆ ಏನೋ ನುಡಿದಳು ; ತತ್ಕ್ಷಣ (ಅಭಿಷೇಕ ನಿಂತುಹೋಗಿ) ನಾನು ರಾಜನಾಗಲಿಲ್ಲ.

**शत्रुघ्न····घटे** — शत्रुघ्नलक्ष्मणाभ्यां गृहीतः घटः यस्मिन् तथोक्ते अभिषेके (प्रस्तुते सति) ರಾಮಾಯಣದ ಪ್ರಕಾರ ಶತ್ರುಘ್ನನು ಅಯೋಧ್ಯೆಯಲ್ಲಿ ಆ ಸಮಯದಲ್ಲಿರಲಿಲ್ಲ. ಭರತನ ಜೊತೆಯಲ್ಲಿ ಕೇಕಯ ರಾಜ್ಯದಲ್ಲೇ ಇದ್ದ. (गच्छता मातुलकुलं भरतेन तदानघः। शत्रुघ्नो नित्यशत्रुघ्नः नीतः प्रीति-पुरस्कृतः ॥) (ಅಯೋಧ್ಯಾಕಾಂಡ ಸರ್ಗ 1, ಶ್ಲೋ 1).

ಭಾಸನ ಪ್ರಕಾರ ಶತ್ರುಘ್ನ ಅಯೋಧ್ಯೆಯಲ್ಲೇ ಇರುತ್ತಾನೆಂಬುದು ಮುಂದೆ ಮೂರನೆಯ ಅಂಕದಲ್ಲಿ 'किं शत्रुघ्नो मामुपगतः' ಎಂಬ ಭರತನ ಪ್ರಶ್ನೆಯಿಂದ ಸ್ಪಷ್ಟವಾಗುತ್ತದೆ. ಈ ಸಂದಿಗ್ಧ ಸ್ಥಿತಿಯಿಂದ ಪಾರಾಗಲು ಕೆಲವರು 'ಶತ್ರುಸಂಹಾರಕನಾದ ಲಕ್ಷ್ಮಣನು ಮಂಗಳಕಳಶ ಹಿಡಿದಿರಲಾಗಿ' ಎಂದು ಅರ್ಥಮಾಡುತ್ತಾರೆ (शत्रून् हन्ति इति). ಆಗ ಶತ್ರುಘ್ನ ಎಂಬ ಪದ ಲಕ್ಷ್ಮಣನಿಗೆ ವಿಶೇಷಣವಾಗುತ್ತದೆ. ಲಕ್ಷ್ಮಣ ಶತ್ರುಸಂಹಾರಕನೇನೋ ನಿಜ. ಆದರೆ ತಂದೆ ಮಹಾರಥನಾದ ದಶರಥನಿಗೆ ಇಲ್ಲಿ ಯಾವ ವಿಶೇಷಣವೂ ಇಲ್ಲದೆ ಲಕ್ಷ್ಮಣನಿಗೆ ಈ ವಿಶೇಷಣವಿರುವುದು ಔಚಿತ್ಯವಲ್ಲ. ಆದ್ದರಿಂದ ಶತ್ರುಘ್ನನೆಂದರೆ ರಾಮನ ತಮ್ಮ ಶತ್ರುಘ್ನನೆಂದು ಅರ್ಥಮಾಡುವುದೇ ಕವಿಗೆ ಅಭಿಮತವೆಂದು ತೋರುತ್ತದೆ.

**छत्रे....गृहीते** — ಶ್ವೇತಛತ್ರವನ್ನು ರುದತಾ ಅಂದರೆ ಆನಂದಬಾಷ್ಪದ ಧಾರೆಯನ್ನು ಸುರಿಸುತ್ತಿದ್ದ ರಾಜ ದಶರಥನೇ ಹಿಡಿದಿದ್ದನು.

**संभ्रान्तया मन्थरया** — ಭಾಸನ ಪ್ರಕಾರ ವರವನ್ನು ನೇರವಾಗಿ ಕೇಳಿದವಳು ಕೈಕೇಯಿಯಲ್ಲ, ಮಂಥರೆ. ಅವಳು ರಾಜನ ಕಿವಿಯಲ್ಲಿ ಏನೋ ಹೇಳಿದಳು. ಅಭಿಷೇಕ ನಿಂತುಹೋಯಿತು. ರಾಮಾಯಣದಲ್ಲಿ ಕೈಕೇಯಿಯು ದಶರಥನನ್ನು ಕಂಗೆಡಿಸಿ ವರವನ್ನು ಬೇಡಿ ಅವನನ್ನು ಧರ್ಮಬಂಧನದಲ್ಲಿ ಸಿಕ್ಕಿಸಿ ಅವನು ವಿಲವಿಲನೆ ಒದ್ದಾಡುವಂತೆ ಮಾಡಿದಳೆಂದು ವಿಸ್ತಾರ ವರ್ಣನೆಯಿದೆ. ಕೈಕೇಯಿಯ ಪಾತ್ರವನ್ನು ಉದಾತ್ತಗೊಳಿಸು

